अयोदशसरे यास्ये॰ वेदादिव्ये चनै एतै। चतुर्दशशरेपश्चात्॰ पृथि मासुनिमाद्दते। दशपञ्चोशरे दर्शा ष्टमीशानेचयोगिनो ॥ वामेशुभप्र दापृष्ठे धांछितार्थप्रदायिथिनो ॥ ह स्थिर्ये भगण्डीयसम्मुखेस्तुदायि नी ॥

योगीन्द्र :। पुं॰ शिवे ॥ योग : पर मात्मचिन्तनम्॰ तद्वत्सुश्रेष्ठ : ॥

योगीश :। पुं॰ शिवे ॥ विष्णौ ॥ अ- न्ये योगिनोयोगान्तरायैर्न्यना॰ ख स्वरूपात्प्रच्याविता॰ अयन्तुतद्विप रतात्तेषामीश : ॥ याज्ञवल्क्य मुनौ ॥

योगीश्वर :। पुं॰ शिवे ॥ योगिनामी श्वर : ॥ याज्ञवल्क्यमुनौ ॥

योगीश्वरी । स्त्री॰ दुर्गायाम् । यथा । योगिभक्ताद्यैर्देवा : सनकाद्या सपोवृता: । तेषांस्वामीतथायोगी ईश्वरीप्रभुपालना ॥ आत्मेन्द्रियम नादीनांसयोगीयोगचक्यते । तेषां चायोजनाद्योगी योगेश्वर्यविशेषने तिदेवीपुराणम्

योगेश :। पुं॰ याज्ञवल्क्ये ॥

योगेश्वर :। पुं॰ सदाशिवे ॥ सर्वज्ञे सर्वशक्तौभगवति । श्रीकृष्णे ॥ सर्वेषामणिमादिसिद्धिशालिनां योगिनामीश्वर । सर्वेषामसिद्धी नामीश्वर : ॥

योगेश्वरी । स्त्री॰ वराटदेशस्थितायां मृदुर्गायाम् ॥ वज्राकर्षोटव्याम् ॥

योगेष्टम् । न॰ सीसके । गणे । सी- साद्धतिप्रसिद्धे धातौ ॥ योगेधातु- सम्बन्धे इष्टम् । सप्तमी तिसमास: ॥

योग्यम् । न॰ ऋद्धिनामौषधौ ॥ वृद्धि नामौषधौ ॥ पुं॰ पुष्यनक्षत्रे ॥ त्रि॰ प्रयोग्ये ॥ योगार्हे ॥ उपाये योग्ये मार्ग: शास्त्रमशक्यागमस्य ॥ यज्ञे ॥ सुच्यसी । युणिर्॰ । स्वह योग्यत् ॥ यद्वा । योगाययप्रभवति । योगाय्यस्य ॥ अभ्यासि ॥ यथा । अपर : प्रणिधानयोग्ययासस्त: प स्वशरीरगोचराभिनिरधु : । प्रणि- धानयोग्ययासमाध्यभ्यासेनयममन यदितिसम्बन्ध : ॥

योग्यता । स्त्री॰ वाक्यार्थज्ञानहेतौ । अर्थाबाधे । अग्निनासिञ्चेदिति नप्रमाणम्॰ योग्यताविरहात् ॥ भावेतल् ॥ शाब्दबोधकारणविशे षे ॥ सतुपदार्थानांपरस्परसम्बन्धे बाधाभाव : ॥ इतिसाहित्यदर्पण: ॥ न्यायमते॰ तत्पदार्थेतत्पदार्थ वत्ता । यथा । पदार्थे तत्रतद्वत्ता योग्यतापरिकीर्तिता । एकपदार्थे ऽपरपदार्थसम्बन्धोयोग्यताऽन्वय : । तज्ज्ञानाभावास्वरङ्किनासिक्तौ ज्वाद्वेनशाब्दबोध: ॥ चमत्ताया नि तिवोच्यप्रसिद्धि : ।

कं भवेत् ॥ इति । रक्तदोषनाशक मौषधं यथा । ब्रह्मयष्टिफलं पिष्ट- वारिणा तनुलेपतः । तेन घृष्टं रक्त दोषः प्रणश्यति न संशयः ॥ रक्त- क्लिव॰ रञ्जनीया । रक्तरागे । गत्य र्थे लिप्तः । कर्मणि क्तः ॥ त्रि॰ अनुरक्ते ॥ नील्यादिरञ्जिते ॥ लो- हिते ॥ क्रीडारते ॥

रक्तक : । पुं॰ पज्ञाने ॥ बन्धूके ॥ रक्तवस्त्रे ॥ रक्तशिग्रौ ॥ रक्तैर- ण्डे ॥ न॰ हिङ्गुलि ॥ त्रि॰ अनुरा- गिणि ॥ विनोदिनि ॥ रक्तपुष्पत्वा त्॰ रक्त: । स्वार्थे कन् ॥

रक्तकन्द : । पुं॰ विद्रुमे ॥ राजपला ण्डौ ॥ रक्तालौ ॥

रक्तकन्दल : । पुं॰ प्रवाले ॥

रक्तकमलम् । न॰ रक्तोत्पले ॥ कोक- नदे ॥

रक्तकम्बलम् । न॰ रक्तोत्पले । यथा माघे । रक्तकमलै: कुमुदै: पुष्पै : कह्लारैरक्तकं वनैरिति ॥

रक्तकरवीरक : । पुं॰ रक्तप्रसवे । ग- णेशकुसुमे । चण्डीकुसुमे । भूत द्राविणि । रविप्रिये । लालकनेर॰ इति भाषाप्रसिद्धे ॥

रक्तकाञ्चन : । पुं॰ रक्तकोविदारद्रु- मे । चमरिके ॥

रक्तकाण्डा । स्त्री॰ रक्तपुनर्नवाया- म् ॥

रक्तकाष्ठम् । न॰ पतङ्गे ॥

रक्तकुमुदम् । न॰ रक्तकैरवे ॥

रक्तकुसुम : पुं॰ पारिभद्रे ॥ धन्वग- वृक्षे ॥

रक्तकेशर : । पुं॰ पारिभद्रे ॥ पुन्ना- गवृक्षे ॥

रक्तकैरवम् । न॰ रक्तकुमुदे ॥

रक्तकोकनदम् । न॰ रक्तोत्पले ॥

रक्तखदिर : । पुं॰ रक्तसारे । मधुग- न्धे । याज्ञिके ॥

रक्तगन्धकम् । न॰ बोले ॥

रक्तगुल्म : । स्त्रीणां रक्तजगुल्मरोगे । तस्यौषधं यथा । तिलयष्टीविपाट्यां चूर्णं पीतं हरेच्चिरम् । तिलक्वाथेन- संयुक्तं रक्तगुल्मं स्त्रियाश्चर ॥

रक्तघ्न : । पुं॰ रोहितकवृक्षे ॥

रक्तघ्नी । स्त्री॰ दूर्वाविशेषे । गाँठिया- दूर्वा इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

रक्तचन्दनम् । न॰ स्वनामप्रसिद्धे च- न्दने । पत्राङ्गे । कुचन्दने । ताम्र सारे ॥ रक्तं शीतं गुरु स्वादु छर्दित- ष्णास्रविषघ्नत् । पित्तनेत्रहितं वृष्यं ज्वरव्रणविषापहम् ॥ रक्तञ्चतच्च- न्दनञ्च ॥ रक्तसारे । रक्तचन्दनमि- व । रक्तसारत्वात् ॥

रक्तचित्रक : । पुं॰ क्षुपविशेषे । काले । कालमूले । दाहके । चि- त्राङ्गे । लालचिता॰ इ॰ गौ॰ दे॰ भा षाप्र॰ ॥

रक्तचूर्णम् । न॰ सिन्दूरे ॥ रक्तवर्णचूर्णमात्रे ॥

रक्तजन्तुकः । पुं॰ भूनागे ॥ रक्तवर्णजन्तुमात्रे ॥

रक्तजिह्वः । पुं॰ सिंहे । त्रि॰ रक्तवर्णजिह्वायुक्ते ॥

रक्तझिण्टी । स्त्री॰ कुरुवके ॥

रक्ततुण्डः । पुं॰ शुकपक्षिणि । त्रि॰ लोहितमुखयुक्ते ॥

रक्ततुण्डकः । पुं॰ भूनागे ॥

रक्तदला । स्त्री॰ गोसृम्बिकायाम् ॥

रक्तत्रिवृत् । स्त्री॰ रक्तवर्णत्रिवृतायाम् । त्रिपुटायाम् । ताम्रपुष्पिकायाम् ॥

रक्तदृक्षिका । स्त्री॰ चण्डिकायाम् ॥ तत्स्थाने ॥

रक्तदला । स्त्री॰ नलिकायाम् ॥ पिपिलिकायाम् ॥

रक्तधातुः । पुं॰ गैरिके ॥ ताम्रे ॥

रक्तनालः । पुं॰ जीवशाके ॥

रक्तनासिकः । पुं॰ पेचके ॥ त्रि॰ लोहितनासिकाविशिष्टे ॥

रक्तपः । पुं॰ यातुधाने । राक्षसे । रक्तं पिबति । पा॰ । आतोनुपे तिक. त्रि॰ रक्तपानकर्त्तरि ॥

रक्तपटः । पुं॰ वैनाशिकविशेषे ॥ भाडस्यभिधौ ॥

रक्तपत्रिका । स्त्री॰ नाकुल्याम् ॥ रक्तपुनर्नवायाम् ।

रक्तपदी । स्त्री॰ समङ्गायाम् । क्षुद्रक्षुपविशेषे ॥

रक्तपद्मः । पुं॰ न॰ रक्तोत्पले । कोकनदे ॥

रक्तपल्लवः । पुं॰ अशोकवृक्षे ॥ लोहितपत्रे ॥

रक्तपा । स्त्री॰ जलौकायाम् ॥ डाकिन्याम् ॥ रक्तं पिबति । पा॰ आतोनुपसर्गे कः ॥

रक्तपाची । स्त्री॰ बृहत्याम् ॥

रक्तपाता । स्त्री॰ जलौकायाम् ॥

रक्तपादः । पुं॰ शुकपक्षिणि ॥

रक्तपादी । स्त्री॰ खम्भासी । हंसपद्याम् ॥

रक्तपायी । स्त्री॰ रक्तपानभोगि ॥

रक्तपायिनी । स्त्री॰ जलौकायाम् ॥

रक्तपारदः । पुं॰ न॰ हिङ्गुले ॥

रक्तपिण्डम् । न॰ जवापुष्पे ॥ इ॰ शब्दरत्नावली ॥

रक्तपिण्डकः । पुं॰ रक्तालौ । रक्तालु॰ इ॰ भा॰ ॥

रक्तपित्तम् । न॰ रोगविशेषे ॥

रक्तपित्तहा । पुं॰ रक्तपन्याम् ॥

रक्तपुष्पिका । स्त्री॰ ब्राह्म्याम् । लाखानौलिप्रसिद्धवस्तुविशेषे ॥

रक्तपुनर्नवा । स्त्री॰ रक्तपुनर्नवशाके । मण्डनपत्रिकायाम् । रक्तकाण्डायाम् । रक्तपुष्पिकाया

रक्तसहा। स्त्री० रक्ताम्लाने ॥
रक्तसार:। पुं० रक्तखदिरे ॥ अ म्लवेतसे ॥ न० रक्तचंदने ॥ पतङ्गे। वकम् ०इतिख्याते ॥
रक्तसीगन्धिकम्। न० रक्तसाह्वारे। रक्तसौंधी०इ०भा०प्र०। रक्तवर्णविकाशविकाशिपुष्पके ॥ रक्तसुतसौगन्धिकस्य ॥
रक्तसंधार:। पुं० रक्तसपतने ॥
रक्तहंसा स्त्री० रागिणीविशेषे ॥
रक्ता। स्त्री० गुञ्जायाम्। लाक्षायाम् ॥ मञ्जिष्ठायाम् ॥ चक्षुराकायराम् ॥
रक्ताकार:। पुं० प्रवाले ॥
रक्ताक्तम्। न० रक्तसम्पन्ने ॥ त्रि० शोणितमिश्रिते ॥
रक्ताक्ष:। पुं० कासरे। महिषे ॥ क्रूरे ॥ पारावते ॥ चकोरे। सारसे ॥ षष्टिवत्सरान्तर्गतवत्सरविशेषे। दुर्भिक्षमरणरोगोधान्यौषधिप्रपीडनम्। पापरोगोभवेद्विरक्ताक्षे ऽमरवन्दिते ॥ ५८ ॥ त्रि० रक्तनेत्रवति ॥ रक्तशीर्षकपोतस्य: । अत्रोदृशे नादिष्वच ॥
रक्ताङ्ग:। पुं० भौमग्रहे ॥ कम्पिल्ले ॥ प्रवाले। मत्कुणे। मण्डले। ग्रायमाले ॥ न० विद्रुमे। घौरे। रक्तचन्दने ॥ कुङ्कुमे ॥
रक्ताङ्गा। स्त्री० जीवन्तिकायाम् ॥
रक्ताङ्घ्री। स्त्री० मञ्जिष्ठायाम् ॥
रक्तातिसार। पुं० रोगविशेषे ॥ पित्तकृत्सुयदाश्चर्यं द्रव्यमश्नातिपैत्तिके। तत्रोपाज्जायते शीघ्रं रक्तातीसार उल्बण: ॥ वत्सकक्तरुत्वगार्द्रादाडिमफलसमवाक्क च। त्वग्युग लंपलमानंविपचेदष्टाङ्गसलिलेतीते ॥ अष्टमभागं शेषं क्वाथं मधुनाविनिपुरुष:। रक्तातिसारसुल्बणमतिशयितं नाशयेद्धियसम् ॥ कुटजदाडिमक्वाथ: ॥ गोदुग्धनवनीतम्मधुनासितयासह। लीढं रक्तातिसारेतु याह्यं परमं महत् ॥ नवनीतावलेह: ॥ पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना। रक्तातिसारजिद्रक्तपित्तदाहमेहनुत् ॥ चन्दनमप्पते तम्। चन्दनयाक्ष: ॥
रक्ताधार:। पुं० चर्मणि ॥
रक्तापहम्। न० बोले ॥
रक्तापामार्ग:। पुं० क्षुद्रापामार्गे। आघट्टके ॥
रक्ताम्बरम्। न० मञ्जिष्ठारक्तकुसुम्भरञ्जितवस्त्रे ॥ काषायवस्त्रे। त्रि० तद्वति ॥
रक्ताम्र:। पुं० कोशाम्रे ॥
रक्ताम्लान:। पुं० कुरुण्टे ॥
रक्तार्क:। पुं० रक्तार्के ॥ शिखीरके। रक्तार्कुरक्तार्कशंसितांकु

रेतानामविवर्जितम् । सुद्राक्षीनंबस्य दत्तंपत्रं सिधिषारंनदीतिलव्यम् ॥

रजसानु : । पुं॰ मेघे ॥ चित्ते ॥

रजस्वल : । पुं॰ महिषे । सैरिभे ॥ त्रि॰ "सरजस्के ॥ रजोऽस्त्यस्य । रज : क्रपीतिवलच् ॥

रजस्वला । स्त्री॰ स्त्रीधर्मिण्याम् । अ व्याम् । आत्रेय्याम् । पुष्पवत्यां- स्त्रियाम् । उदक्यायाम् । द्वादशा द्वत्सरादूर्ध्वमापञ्चाशत्समा : स्त्रि य : । मासिमासिभगद्वाराप्रकृत्यै वार्त्तवंस्रवेत् ॥ तत्र प्रथमेऽहनि चण्डाली द्वितीयेब्रह्मघातिनी । तृ- तीयेरजकीपुंसायथावन्यांतथाङ्ग- ना ॥ शुद्धाभर्त्तुश्चतुर्थेऽह्निस्नानाद्दे वपैत्रयो : । दैविकंपैत्रेचक- र्मणिहनिशुद्ध्यति । रजोऽस्त्यस्या : । रज : क्राप्यासुतिमरिपदीवलच् । सतीसम्पर्दीद्वतिभत्त्वम् ॥ सिंहक- र्णरथेर्दैनयान् ॰ यथा । सिंहक- र्णटयोमध्येसर्वानद्योरजस्वला : । तासुस्नानंनकुर्वीतवर्जयित्वासमु- द्रगा : । उपाकर्मणिचोत्सर्गेप्रेत- स्नानेतथैवच । चन्द्रसूर्योपरागेचर सीदोदानविदाति ॥ दशवर्षाधिका यांनार्याम् ॥

रजि : । पुं॰ चन्द्रवंशीयराजविशे- षे ।

रञ्जित : । त्रि॰ प्राकृते ॥ रङ्ग्यते-

न्यात्कर्मविद्ध : । रजोबीजसगरम- यद्रक्त्युपधानकारणेप : ॥

रजोगुण : । पुं॰ अप्रीत्यात्मकेप्रकृति- गुणे ॥ अप्रीतिरात्मभावोयस्य । उ पष्टम्भकंचलञ्चरज : । सत्त्वतमसो स्वयमक्रियत्वात्स्वकार्यप्रवृत्तिंप्रत्य वसीदन्तौरजसोपष्टभ्येते॰ उत्साहंप्र यत्नंकार्यते । तदिदमुक्तमुपष्टम्भकं रजइति । कस्मादित्यतउक्तं॰ चलमि ति । तदनेन॰ रजस : प्रवृत्त्यर्थत्वं दर्शितम् । यदु : खपीतुकाद्य : खा त्मकंरज : । रज:कार्येकाम्यतमादौ ॥

रजोनिमीलित : । त्रि॰ रजोगुणाक्ष ते । अपथेपदमर्पयन्तिहिश्रुतव- न्तोऽपिरजोनिमीलिता : ॥

रजोबलम् । )
रजोरसम् । ) न॰ अन्धकारे ॥

रजोविशाल : । पुं॰ भूलोके । मध्ये रजोविशाल : सवधर्माधर्मानुष्ठा- नपरत्वात्॰ दु : खबहुलत्व॰ च॰ रजो विशालइतिसांख्याचार्या : ॥

रजोहर : पुं॰ रजके ॥

रज्जु : । स्त्री॰ वेण्याम् । बन्धनसाध नवस्तुनि । शुल्बे । वराटके । गुणे । डोरी॰ रस्सी॰ इ॰ भा॰ । सृज्यते । सृजविसर्गे । सृजेरसुमच । धातु सकारोच्चारणश्च । सस्यचुर्देनग :॰ अशब्देनज : ॥ मध्यगुरी॰ । उ । ॰ ॥

रज्यमान : त्रि॰ लोहितायमाने ॥

रञ्ज दैवादिकात्पाठविशानच् । अ निदितामितिनलोप: ।

रञ्जक: । पुं॰ कुसुम्भादिना वस्त्रादि रागकर्तरि ॥ कम्पिल्लके ॥ प्रीति जनके ॥ न॰ हिङ्गुले ॥

रञ्जन: । पुं॰ रागजनने । मुञ्जतृणे । न॰ रक्तचन्दने । हिङ्गुले । पतङ्गे । वक्रम्॰ पु॰ भा॰ । वर्णान्तरापादने । रञ्जयति । रञ्जरागे । अन्त: । युच् । ल्युट् वा ।

रञ्जनक: । पुं॰ कट्फले ।

रञ्जनी । स्त्री॰ गन्धरोचनिकायाम् । नील्याम् । मञ्जिष्ठायाम् । शेफालिकायाम् । हरिद्रायाम् । पर्पट्याम् । रञ्जयति । रञ्ज॰ । ल्युट् । णिलोपस्थानिवद्भावादशनलोपो नेति केचित्तन्न । रज्यतेऽनयेति विग्रहेतु॰ करणे तिल्युटि भवत्येव । रञ्जे : पृत्रिनिति ॥

रञ्जनीय: । त्रि॰ रागोत्पादनयोग्ये ।

रटित: । त्रि॰ कथिते ॥ रटे : कर्मणि क्त: । न॰ ध्वनमात्रे ।

रण: । पुं॰ क्वाणे । वीणादिवादने । कणे । पुं॰न॰ युधि । समरे । युद्धे ॥ रणनम् । रणन्ति शब्दायन्तेऽस्मिन्निति वा । रणशब्दे । वशिरण्यो रिवप् ॥ रणति । रणे : पचाद्यच् ।

रणम् । पुं॰ ध्वनति ॥

रणतूर्यम् । न॰ सङ्ग्रामपटहे । भयडिण्डिमे । युद्धवाद्ये ॥

रणप्रिय: । पुं॰ श्येनविहगे ॥ न॰ उशीरे । वीरणमूले ॥

रणमत्त: । पुं॰ हस्तिनि । द्विपे ॥

रणमुष्टि: । पुं॰ विषमुष्टिक्षुपे ॥

रणरङ्ग: । पुं॰ रणक्षात्रहस्तिनि । प्रतिमे ।

रणरण: । पुं॰ मशके ॥ न॰ उद्वाहने

रणरणक: । पुं॰ उत्कण्ठायाम् । कामे ॥

रणसङ्कुलम् । न॰ तुमुले । व्याकुले रणे । रणसङ्कुलम् ।

रणसमुद्यम: । पुं॰ युद्धोद्योगे ।

रणाङ्गनम् । न॰ युद्धस्थले ।

रणालङ्कार: । पुं॰ कङ्कपक्षिणि ।

रण्ड: । त्रि॰ अवयवावच्छिन्नावयवे ॥ धूर्ते ॥

रण्डक: । पुं॰ अफलद्रुमे ॥

रण्डा । स्त्री॰ मूषिकपर्ण्याम् ॥ विधवायाम् । रमन्तेऽत्र । रमक्रीडायाम् । अमन्ताड्ड: । टाप् ॥

रण्डाश्रमी । पुं॰ अष्टचत्वारिंशद्वर्षानन्तरं भार्याविहीने । यथा । चत्वारिंशद्वर्षाणामूर्ध्वं पत्नीं विवर्जितः । अनाश्रमी संवत्सरं रण्डाश्रमीमत : ।

रतम् । न॰ मैथुने । सुरते । तद्विविधम् । यथाहवात्स्यायन: । बाह्यमाभ्यन्तरञ्चेति द्विविधं रतम्

च्यते । तत्राद्यं चुम्बनाश्लेषनखद न्तघातादिकम् । द्वितीयं सुरतं साधाङ्गानाकारेणकल्पितमिति । चि० गुह्ये । अभिरते । अनुरक्ते रमणम् । रम० । नपुंसकेभावेक्तः । अनुदात्तोपदेशेतिनलोपः ।

रतकील : । पुं० कुक्कुरे ।

रतकूजितम् । न० रतिकालमधाया म् । मणिते ।

रतगुरु : । पुं० भर्त्तरि हृदयेशे ।

रतज्वर : । पुं० काके ।

रतताली । पुं० विट्टे ।

रतताली । स्त्री० कुट्टन्याम् ।

रतनाराच : । पुं० नारीणांशीत्कारे । स्मरे । शुनि । विट्टे ।

रतनिधि : । पुं० खञ्जने ।

रतराग : । पुं० सुरताभिलाषे ।

रतर्चिकम् । न० दिवसे । सुखस्ना ने । अष्टमङ्गले ।

रतमथ : । )
रतमाथी । ) पुं० कुक्कुरे । शुनि ।

रतहिण्डक : । पुं० स्त्रीचौरे । लम्प टे ।

रतान्दुक : । पुं० कुक्कुरे ।

रतान्धी । स्त्री० कुक्कुर्यां ।

रतामर्द : । पुं० कुक्कुरे ।

रतायनी । स्त्री० वेश्यायाम् ।

रतार्थिनी । स्त्री० मैथुनाभिलाषिण्या म् । कामुक्याम् ।

रति : । स्त्री० स्मरदारेषु । कामदेव स्यपत्न्याम् । आधाढिस्थानस्था यांदेव्याम् । सुरते । गुह्ये । रागे । अनुरागे । यथा । भगवान् ब्रह्म०वात्स्यन्येनचिरन्तीष्यमनीष या । तदप्यवसन्नकूटस्थोरतिरात्म न्यतोभवेदिति । रम्यतेऽनया रम० । क्तिन् । अनुदात्तोपदेशव नतितनोत्यादीनामनुनासिकलोपो झलिक्ङितिइतिमलोपः । चेत: परितोषे । स्त्र्यर्थसंयोगजनितायां क्रीडायाम् । वृत्ताविशेषे । यथा । यूनोरन्योन्यविषयस्थायिनी च्छारति : स्मृतेतिरसार्णवसुधा कर : ।

रतिकुहरम् । न० भगे । योनौ ।

रतिकूजितम् । न० मणिते । मैथुनश ब्दे । रते : कूजितम् ।

रतिक्रिया । स्त्री० सम्वेशने । मैथुने ।

रतिगृहम् । न० योनौ । रमणम न्दिरे ।

रतिचक्रम् । न० कामिन्यासक्रीड़ ने । यथा । शास्त्रस्यविषयस्तावद्या वन्मन्दरसोनर : । रतिचक्रेप्रवृत्ते तुनशास्त्रंनाचिक्रम : ।

रतिनाग : । पुं० षोडशबन्धान्तर्गत बन्धभेदे । तल्लक्षणं यथा । पीड येदूरुयुग्मेनपद्मामुत्कामिनीयदि । रतिनाग : समाख्यात : कामिनी

नांमनोरम : ॥

रतिपति : । पुं॰ कामदेवे ॥ रते : पति : ॥ देशविशेषस्थस्त्रीणांस्थानविशेषेतस्याविर्भावोयथा । शाचिश्रीमाथुरीणांजलकजनगदस्यायिनीनांकटाक्षे॰ वङ्गीगौडाङ्गनानां॰ सुललितजघनेचोत्कलप्रेयसीनाम् । तैलङ्गीनांमितंवे॰ सजलघनकचौके रलीक्षेत्रप्रायशि॰ कार्णाटीनांकटौच-स्फुरतिरतिपतिर्गुर्जरीणांस्तनेषु ॥

रतिपाशकः । पुं॰ रतिबन्धविशेषे ॥ यथा । पीडयेदूरुयुग्मेनकासुकोयदिसुन्दरीम् । रतिपाशस्तथाख्यात : कामिनीनांसुखावह : ॥

रतिप्रिय : । पुं॰ कामदेवे ॥ रति : प्रियायस्य । सुरतप्रिये ॥

रतिबन्ध : । पुं॰ पद्मासनादिषोडशसु । तेयथा । पद्मासनोनागपाशो लताविष्टोऽर्द्धसम्पुटम् । कुलिशं सुन्दरश्चैवतथाकेशरएवच ॥ हिल्लोलोनरसिंहोपिविपरीतस्तथापर : । क्षुब्धोथैधेनुकश्चैवमुत्कण्ठस्तुतत: परम् ॥ सिंहासनोरतिनांगोविद्याधरस्तुषोडश : ॥

रतिमदा । स्त्री॰ अप्सरसि । स्वर्वेश्यायाम् ॥

रतिमन्दिरम् । न॰ योनौ ॥ मैथुनगृहे ॥

रतिमित्र : । पुं॰ रतिबन्धविशेषे ॥ यथा । पातयेदूरुयुग्मेचकासुकोयदिकामुकी । रतिमित्रस्तथाख्यात: कामिनीनांसुखावह : ॥

रतिरमण : । पुं॰ कामदेवे ॥

रतिलक्षम् । न॰ निधुवने ॥

रतिलाभ : । पुं॰ सुरतसुखप्राप्तौ ॥ यथोक्तं रतिरहस्ये । स्पृष्टताचपुषिमीलनं दृशोर्मूर्च्छनं चरतिलाभलक्षणम् । श्लथयेत्स्वजघनं मुहुर्मुहु: सीत्करोतिगलगद्गदाकुलेति ॥

रतिसत्वरा । स्त्री॰ पिरक्षीवायाम् । पिच्छिलशाखा॰ द्र॰ गौ॰ दे॰ भा॰ ॥

रतिसुन्दर : । पुं॰ रतिबन्धविशेषे ॥ यथा । नारीपदद्वयं कामीधारयेद्हृदयेयदि । धृत्वकण्ठोरमेत्कामीबन्ध: स्याद्रतिसुन्दर : ॥

रत्नू : । स्त्री॰ देवनद्याम् सत्यवाचि ॥ ऋदिति सौत्रो धातु: । तत : फलेरम् चेतिक्नू : अमागमश्च ॥

रतोद्वह : । पुं॰ कोकिले ॥

रत्यङ्गम् । न॰ भगे । योनौ ॥ रते : सुरतस्याङ्गम् ॥

रत्नम् । न॰ स्वजातिश्रेष्ठे । जातौ जातौयदुत्कृष्टं तद्रत्नमभिधीयते ॥ मणौ । धनाधिपेनोजना : सर्वेरमन्ते स्मिन्नतोयत् । ततोरत्नमिति प्रोक्तं शब्दशास्त्रविशारदै : ॥ तत्तु पाषाणभेदोस्तिमुक्तादिचतदुच्यते तानिनवधानिरूपितानियथा । व

संज्ञायांस्वरूपक्रीतिखच् । व्युत्पत्ति माचं नत्वस्ययवार्थानुगम : ॥

रथपर्य्याय : । पुं॰ वेतसवृक्षे ॥ रथ : पर्यायोऽस्य ॥

रथपाद : । पुं॰ चक्रे ॥

रथव्रज : । पुं॰ रथकाव्यायाम् ॥ रथानांव्रज : ॥

रथपुष्पा । स्त्री॰ नदीविशेषे ॥ रथंपिबति , पा॰ । क : । पारस्करादित्वात्सुट्पत्वेनिपातसिद्धे ॥

रथसाधक : । पुं॰ तिनिशे ॥ रथस्य साधक : ॥

रथाङ्ग : । पुं॰ कोकपक्षिणि ॥ अपस्करे । चक्राभिन्नेरथावयवे ॥ म॰-चक्रे । रथस्याङ्गम् ॥

रथाङ्गपाणि : । पुं॰ विष्णौ ॥ रथाङ्गं पाणीयस्य : । प्रहरणार्थेभ्य: परे निष्ठासप्तम्यौभवत : ॥

रथाङ्गाह्वय : । पुं॰ चक्रवाके ॥ रथाङ्गस्याह्वयोनामयस्य ॥

रथाङ्गी । पुं॰ ऋद्धौषधौ ॥ रथाङ्गं चक्रमस्यास्ति । इनि : ॥

रथाङ्गी । स्त्री॰ ऋद्धिनामौषधौ ॥

रथान्तर : । पुं॰ कल्पभेदे ॥

रथाभ : । पुं॰ वेतसवृक्षे ॥

रथारोही । पुं॰ रथस्थयुद्धकर्त्तरि । रथिनि ॥

रथावर्त्त : । पुं॰ धूमावतीदक्षिणार्द्धे तीर्थविशेषे ॥

रथिक : । त्रि॰ रथिनि । रथस्वामिनि ॥ रथोऽस्यास्ति । अतइनिठनाविति ठन् ॥ रथेनचरतिवा । पर्पादिभ्यष्ठन् ॥ षिद्गौरादिभ्यश्चेति ङीषि॰ रथिकी ॥

रथिका । स्त्री॰ क्षुद्ररथे । स्वार्थेकन् ॥

रथी । पुं॰ स्यन्दनारोहे । रथारोहिणि । रथस्वामिनि । रथिके ॥ रथोऽस्यास्ति । इनि : ॥

रथिन : । पुं॰ रथिनि । रथसाधन : । प्रज्ञादित्वादण्वा ? ॥

रथिनी । स्त्री॰ रथकट्यायाम् ॥ रथानांसमूह : । खलादिभ्यइनिर्वक्तव्य : ॥

रथिर : । पुं॰ रथिकि । रथोऽस्यास्ति । मेघारथाभ्यामिरन्निरचौवक्तव्याविरच् ॥

रथ्या । स्त्री॰ प्रतोल्याम् । मनुभोजी ॰ पृ॰ भा॰ ॥ वह्नादिभ्यश्चेति ङीष् ।

रथोद्धता । स्त्री॰ विष्टुप् ११ प्रभेदे ॥ रात्परैर्नरलगैरथोद्धता । यथा । राधिकादधिविलोडनस्थिताकृष्णवेणुनिनदैरथोद्धता । यामुनतटनिकुञ्जमञ्जसा साजगामसलिलाहृतिच्छलात् ॥ रथयुद्धता ॥

रथ्य : । पुं॰ रथवाहकाश्वे । रथघोटरि ॥ रथंवहति । तद्वहतिरथयुगप्रासङ्गमितियत् ॥ रथांसे । चक्रे

॥ रथस्याङ्गम् । रथाद्यत् ॥

रथ्या । स्त्री॰ रथौघे । रथानांसमूहः । खलगोरथादितियत् ॥ प्रतोल्याम् । विशिखायाम् । राजमार्गेतरमार्गे । जनसञ्चारिमार्गे । वर्त्मन्याम् । पथि ॥ चत्वरे ॥ रथाय हिता । तत्प्रकारयोः रथायेतियत् ॥ रथंवहतिया । तद्वहतीतियत् ॥

रदः । पुं॰ विलेखने ॥ दंते ॥ पुरुषदन्तलक्षणंयथा । विवर्णैर्धनहीनाश्चदन्ताः स्निग्धघनाः शुभाः । तीक्ष्णादंष्ट्राः समाः श्रेष्ठाजिह्वारक्तासमाशुभा ॥ अपिच । कुन्दकुड्मलसङ्काशैः प्रकारैर्दशनैर्नृपः । भक्ष्यवानरदन्ताश्चनित्यंचपरिपीडिताः ॥ हस्तिदन्ताः खररदाः स्निग्धदन्तागुणान्विताः । करालैर्विषमैर्दीर्घैर्दशनैर्दुःखजीविनः ॥ द्वात्रिंशद्दंतानराणामेकोनोत्तमभोगवान् । त्रिंशद्दंतानरायेतेसुखदुःखस्यभागिनः ॥ एकोनत्रिंशद्दशनाः पुरुषादुःखजीविनः ॥ अष्टाविंशद्रदायेषांतेतुदुःखभाजनाः ॥ स्त्रीदन्तलक्षणंयथा । कुन्दपुष्पसमादन्ताभाषितंकोकिलासमम् । दाक्षिण्ययुक्तमशठंहंसशब्दसुखावहम् ॥ नासासमासमपुटास्त्रोणाग्नुरुचिराशुभा । करालविष-मादन्ताः क्लेशायचभयायच ॥ चौर्यापकृष्टमांसाश्चदीर्घाभर्तुश्चमृत्यवे । इति ॥ दन्तस्यलग्नशुचित्वं यथा । दन्तवद्धन्तलग्नेषुजिह्वास्पर्शैश्शुचिर्भवेत् ॥ अपिच । दन्तलग्नसमंहार्यंलेपंमन्येतदन्तवम् । नतत्रबहुशःकुर्याद्यत्नमुद्धरणेपुनः ॥ भवेदशौचमत्यर्थंतृणविधाद्वणेकृते ॥ रदति । रदविलेखने । पचाद्यच् ॥

रदच्छदः । पुं॰ ओष्ठे ॥

रदनः । पुं॰ रदे । दन्ते । रद्यतेनेन । रद॰ । करणेतिल्युट् ॥ न॰ उत्खनने ॥

रदनच्छदः । पुं॰ ओष्ठे ॥ अधरे ॥ रदनाच्छाद्यन्तेऽनेन । छदसंवरणे । घुरादिः । पुंसीतिघः । छादेर्घेद्व्यपसर्गस्य । इतिह्रस्वः ॥ अस्यशुभाशुभलक्षणंयथा । मांसलैश्चधनोपेताश्चक्ररधरैर्नृपाः । विम्बोपमैश्चस्फुटितैरोष्ठैरुक्षैश्चखण्डितैः । विवर्णैर्धनहीनाश्चदन्ताः स्निग्धघनाः शुभाः ॥

रदनी । ) पुं॰ हस्तिनि ॥
रदी । )

रन्तव्यः । त्रि॰ रन्तुंयोग्ये । रम॰ । तव्य॰ ॥

रन्तिदेवः । पुं॰ साङ्कृतिपुत्रेभरतान्वयोत्पन्ने॰चन्द्रवंशीयन्नृपतिश्रेष्ठे । यस्ययशः पुराणेप्रसिद्धम् । यस्यकरुणावतीयश्लोकः । नकामयेऽहंग

तिमीश्वरास्परामष्टर्द्धियुक्तामपुनर्भवञ्च । यान्ति प्रपद्यो ख्रिलदेवभाजामन्तः स्थितोयेनभवन्त्वदु:खाः॥

गरुडध्वजे । विष्णौ ॥ कुक्कुरे ॥

रन्ध्रु: । पुं० वत्मनि ॥ स्त्री०नद्याम् ॥

रधनम् । न० पाके ॥ छर्द्दने ॥ –

रन्ध्रम् । न० दूषणे ॥ छिद्रे ॥ रमणम् । सम्पदादित्वात्क्विप् । संज्ञापूर्वकत्वान्नदीर्घ : । रन्ध्रं करोति । मूलविभुजादित्वात्क : ॥ यद्वा । रंधयति । रधिहिंसासंराध्योः । बाहुलकाद्रक् ॥ अष्टमभवने ॥ चन्द्रस्य कुचिनाभिमध्यभागे ॥ यथोक्तम् । कुचिनाभ्यन्तरेरन्ध्रं सुपरन्ध्रं तथोपरीति ॥

रन्ध्रकरट : । पुं० जालवर्बुरके ॥

रन्ध्रकार : । त्रि० छिद्रस्यकारके । रन्ध्रस्तीतिवियेरा०कृ०भाषा०प्र० ॥ रन्ध्रं करोति । क्रणोहेतुताच्छील्यानुलोम्ये ध्वितिकृञ ट:प्रत्यय: ।

रन्ध्रबभ्रु : । पुं० चुंदुरो ॥

रन्ध्रवंश : । पुं० सछिद्रवंशे । कीचकाख्ये । मस्करे । सुषिरासे ॥ अस्यगुणायथा । वंशौस्तस्तौकषायौ चकिञ्चित्तिक्तौचशीतलौ । सूक्ष्मकृच्छ्रमेहार्शः पित्तदाहास्रनाशनौ । विशेषोरन्ध्रवंशस्तुदीपनोजीर्णनाशक : । रुचिकृत्पाचनोहृद्य : शूलरोगुल्मनाशन : ॥

रप : । न० पापे ॥

रभस : । पुं० हर्षे ॥ यथा । शुचावप्रथाचोधरिणरिरभेध्यप्रचयभूरयंभूतावासोविमृशकियतीयातिनदृशाम् । तद्विमिन्धीरणांशणमपिकिमाश्वातुमुचितंफलीकार: कोयंयदृशमहमिवेतिरभसवृत्तिशिष्टाणामिश्राः ॥ पुं०अभिधानविशेषे ॥ पौर्वापर्यविचारे ॥ त्रि०तद्वति ॥ रभते । रभ राभस्ये । अत्यविचमीच्यादिनाऽसच् ॥ तदस्यर्थमस्याच् ॥

रम : । पुं० कान्ते ॥ रक्ताशोकद्रुमे । यारे ॥ रमते । रम० । पचाद्यच् । रमणे ॥

रमक : । पुं० विलासिनि । कान्ते ॥ रमते । रम० । रमेरस्त्वोचेतिवुन् ॥ केलिविकर्मधापररक्षके ॥ रमयति । ण्वुन् ॥

रमठम् । न० ) हिङ्गुनि ॥
रमठध्वनि: । पुं० )

रमण : । पुं० भवे । प्रिये । पत्यौ । यारे । कामदेवे ॥ रमयति । रम० । नन्द्यादित्वाल्ल्यु : ॥ वर्णवृत्तान्तरे ॥ सगणोरमण : । कविनाकथित : ॥ यथा । धनदोधनद । भवताभवतात् ॥ रासभे ॥ वृषणे ॥ महारिष्टे ॥ न०पटोलमूले ॥ जघने । स्वस्ने । ग्राम्यधर्मे । सुरते । मैथुने । क्रीडारते ॥ मधा

सुखे ॥ क्रीडने ॥

रम्यकम् । न॰ जम्बुद्वीपस्योपद्वीप विशेषे । रम्यकवर्षे । यथा । एवमेवो त्तरेनीलवर्षाचितपोधन । कुरु वर्षे सिन्धु कूलाच्च दृश्यावधिः स्मृ तः ॥ हिरण मयंततोवर्षं श्वेताव धिनिगद्यते । रम्यकस्तततोवर्षं नी लसन्नावधिः स्मृतः ॥ अपिच । दृश्यिर्षं नसुद्धेतन्नानिषधस्योत्तरेच तु । वर्षं रम्यकनामायन्न तत्र मानवाः ॥ शुक्लाभिजनसम्पन्नाः सर्वेसुप्रियदर्शनाः । दृश्यमणं सखा- स्ताणियतानिदश्यपश्यच ॥ जीवन्ति तेमहाभागनित्यं सुदितमानसा ॥ इतिपाद्मे भूखण्ड ॥

रमणा । स्त्री॰ रमण्याम् ॥

रमणी । स्त्री॰ विशेषाङ्गनायाम् । ना र्याम् ॥ रमयति॰रम्यतेवाताम् । रम॰ । ल्युट् ॥ वालाख्यवृक्षे ॥ वेदिकायाम् ॥ ॰ ( * ) ॰

रमणीयः । त्रि॰ सुन्दरे । शोभने । रम॰ । अनीयर् ॥

रमणीयकम् । न॰ छन्दोविशेषे । रा न्नभहितयरैरुदितंरमणीयकम् । इतिलक्षिते ॥

रमणीयचरणः । त्रि॰ सुकृतिनि । पु ण्यकर्मण्यि ॥ रमणीयशोभनंचर- णं शीलयस्य ॥

रमण्यः । त्रि॰ रमणीये ॥ रमतेऽस्मि

न् । रम॰ । पूरस्योर्यत्न्यः ॥

रमतिः । पुं॰ नायके ॥ नाके ॥ कामदेवे ॥ काले ॥ रमतेऽस्मिन् । रम॰ । रमिनिर्दिश्यतिः ॥

रमा । स्त्री॰ लक्ष्म्याम् । पद्मालयाया म् । सर्वंचरमसे यस्मात्तस्मात्तद्- विध्यसीतिविष्णुग्रायोन्ततैरुक्तः श्रीदेवीभागवते ॥ हालाहलोनैव- विषं विषं रमापर जनाव्यत्ययमेवम न्यते । योगेनजागर्ति मिपीयत शिवः स्मरन्रमांमुह्यतिनिद्रयाह रिः ॥ रमयति । रमक्रीडा यास् । पचाद्यचि॰टाप् ॥ शशिभूनराजक न्यायाम् । कस्मिदेवपत्न्याम् । शोभायाम् ॥

रमाधवः । पुं॰ )

रमानाथः । पुं॰ )

रमापतिः । पुं॰ ) विष्णौ । रमाया धवः । नाथः पतिर्वा ॥ ०

रमाप्रियम् । न॰ पद्मे ॥

रमावेष्टः । पुं॰ श्रीवासे ॥

रमितः । त्रि॰ रतिप्रापिते ॥

रमेश्वरः । पुं॰ विष्णौ ।

रम्भः । पुं॰ वेणौ ॥ मैघवदण्डे ॥ वानरविशेषे ॥ महिषासुरस्यपित रि रभते । रमराभस्ये । पचाद्य च् । रमेरशवलिटोरितिनुम् ॥

रम्भा । स्त्री॰ कदल्याम् । अपसरो भेदे ॥ दुर्गायाम् ॥ गौध्वनौ । थे

राजहंसः । पुं० कलहंसे । चरणैश्चञ्चुसहितैर्लोहितैर्धवलैः सिताः । ते राजहंसा विख्याता इत्याहुः कोषकोविदाः ॥ हंसानां राजा । राजदन्तादिः ॥ कादम्बे । कालिदास० इति गौडदेशप्रसिद्धे । नीलहंसे च ॥ नृपोत्तमे ॥

राजहंसिनी । स्त्री० रसालायाः प्रभेदे । राजहंसाभम् । निर्मलं पाचितं क्षीरं माहिषं तद्वद्दधि । शुभ्रशर्करया लाव्यं गालितं राजहंसिनी ॥ राजहंसी सुमधुरा बल्या ह्यपतरा क्षिमा । चात्यर्थं पित्तशमनी किञ्चित् कफकारी स्मृता ॥

राजहर्षणम् । न० तगरपुष्पे ॥

राजहस्ती । पुं० राजगजे । मातङ्गे । यावाकगजे । मदोत्कटे ॥

राजहासकः । पुं० मत्स्यविशेषे । कातरे । भालले । राजीवे ॥

राजातनः । पुं० पियालवृक्षे । राजानमतति । अत० । कर्त्तरि ल्युट् ॥

राजादनः । पुं० फलाध्यक्षे । क्षीरिकायाम् न० पियाले । राजभिरद्यते । अद० । कर्म्मणि ल्युट् । किंशुके । विपवर्के ॥

राजादनी । स्त्री० क्षीरिकायाम् । खिरनी० इ० भा० ॥

राजानुजीवी । त्रि० राजोपजीविनि ॥ तस्य कर्माणि यथा । मत्स्य उवाच । यथानुवर्त्तितव्यं स्यान्मनुजो राजोपजीविना । तथा ते कथयिष्यामि निबोध गदितो मम । आज्ञा सर्वात्मना कार्या स्वयं तस्यारविनन्दन । चाक्षिप्य वचनं तस्य न वक्तव्यं तथा वचः ॥ अनुकूलं प्रियं तस्य वक्तव्यं धर्मसहितम् । रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥ परार्थं न च वक्तव्यं स्वयं चेतसि भावयेत् । स्वामिनः सुप्रियं कार्यं न स्वयं तु कदाचन । कार्याभिघातः सर्वं पुरस्थितव्यः प्रयत्नतः । नहिंस्यं धनं किञ्चिन्नियुक्तेन च कर्मणि ॥ नोपेक्ष्यमस्य मानं स्यात् तथा राज्ञः प्रियो भवेत् । राज्ञश्च न तथा कार्यं वेषभाषितचेष्टितम् ॥ राजलीलां न कर्त्तव्यां तद्विद्विष्टं विवर्जयेत् । राज्ञः समोऽधिको वेषो न कार्यो वै विजानता ॥ द्यूतादिषु तथैवास्य कौशलं न प्रदर्शयेत् । प्रदर्श्य कौशलं चास्य राजानं तु विशेषयेत् ॥ अन्तःपुरजनाध्यक्षैर्वैरदूतैः समागतैः । संसर्गं न व्रजेद्राजन् विना पार्थिवशासनम् ॥ निःस्नेहतां चावमानं प्रयत्नेन च गोपयेत् । यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ॥ नृपेणाश्रावितं यत् स्यादवाच्यं तन्नृपोत्तम । न तत् सम्प्रावयेल्लोके तस्माद्राज्ञः प्रियो भवेत् । आज्ञाप्यमाने-

रात्रौजागरणकर्त्तरि ॥

रात्रिजागरद: । पुं॰ मशके ॥

रात्रिञ्चर: । पुं॰ यातुधाने । राक्षसे ॥ रात्रौचरति । चरेट: । रात्रे: कृतिविभाषेतिपक्षेमुम् ॥ त्रि॰ रात्रौगमनकर्त्तरि ॥

रात्रिचरी । स्त्री॰ राक्षसाम् ॥

रात्रिन्दिवम् । अ॰ अहोरात्रयो: ॥ रात्रौचदिवाच । अचतुरेत्यादिना ऽधिकरणार्थयोर्द्वन्द्वेसमासान्तो-निपातित: । अव्ययात्मत्वादव्ययम् ॥

रात्रिपुष्पम् । न॰ उत्पले ॥

रात्रिमट: । पुं॰ राक्षसे ॥ अटति । अटगतौ । पचाद्यच् । स प्तमीतियोगविभागात्समास: ॥ रात्रौअटतिवा । रात्रे: कृतिविभाषेतिमुम् ॥

रात्रिमणि: । पुं॰ चन्द्रे ॥ रात्रेर्मणिरिव ॥

रात्रिवास: । पुं॰ अन्धकारे ॥ रात्रौवासोऽस्य ॥

रात्रिवास: । न॰ रात्रौशयनकाली नपरिधेयवस्त्रे ॥ यथाशयनञ्चान्य कारेणुरात्रिवासोदिनेतथा । स्नाना म्बरकुवेशश्च पर्यवेक्षुण्कमोजन म् ।

रात्रिविगम: । पुं॰ प्रभाते ॥ रात्रे र्विगमोऽत्र

रात्रिविश्लेषगामी । पुं॰ चक्रवाके ॥

रात्रिवेद: । पुं॰ कुक्कुटे ॥

रात्रिवेदी । पुं॰ कुक्कुटे ॥

रात्रिहास: । पुं॰ श्वेतोत्पले ॥

रात्रिहिण्डक: । पुं॰ अन्त: पुररक्षके ॥

रात्री । स्त्री॰ निशायाम् । रात्री ॥ कृदिकारादक्तिनइतिङीष् ॥

रात्रौ । अ॰ निशि ॥

रात्र्यन्ध: । त्रि॰ रात्रौद्दष्टिहीननरे । एतस्या॰ द्र॰ भा॰ ॥ तन्नाशकौषधय था । देवदारीवचैचूर्णमजामूत्रेण भावयेत् । एकविंशतिवारसच्छिगी वेनपाययेत् ॥ राज्यन्धतामटसला नश्चेदितिविनिश्चय: ॥ इतिगारु डे ॥ १८८ ॥ अध्याय: ॥ धा-त्वादौ ॥

राद्ध: । त्रि॰ पक्वे । सिद्धे ॥ सा-ध्ये ॥ राध्यति । राध॰ ॥ राधि रनिट: क्त: ॥

राद्धान्त: । पुं॰ सिद्धान्ते ॥ राद्ध: सिद्धोन्तोनिश्चयोयस्मिन् ॥

राध: । पुं॰ वैशाखमासे । माधवे ॥ राधा॰विशाखा॰तद्युतापौर्णमासी॰ राधी । साऽस्मिन्नस्ति । साऽस्मिन्पौ र्णमासीत्यण् ॥

राधनम् । न॰ साधने ॥ प्राप्तौ ॥ तोषे ॥

राधना । स्त्री॰ भाषणे ॥

राधरङ्क : । पुं॰ सुनासीरे ॥ सौरवी ॥ पंनीपली ॥ शीकरे ॥ इ॰ मेदिनी ॥

राधरङ्कु : । पुं॰ राधवङ्कार्ये ॥ इति हेमचन्द्र : ॥

राध : । न॰ ऐश्वर्ये ॥

राधा स्त्री॰ गोपीविशेषे । तस्यानामानियथा । राधारासेश्वरीरासवासिनीरसिकेश्वरी । कृष्णप्राणाधिकाकृष्णप्रियाकृष्णस्वरूपिणी ।कृष्णवामांगसंभूतापरमानन्दरूपिणी। कृष्णावृन्दावनीवृन्दावृन्दावनविनोदिनी ॥ चन्द्रावतीचन्द्रकान्ताश्च ।शतचन्द्रनिभानना । नामान्येतानि सारापितेषामभ्यन्तराणि चेति ॥ राधेत्येवञ्चसंसिद्धाराकारोदानवाचक : । स्वयं निर्वाणधात्रीयासारा धापरिकीर्त्तिता इतिब्रह्मवैवर्त्त पुराणम् । राधेतिरस्यसानुकामांसतैःराधेतिकीर्त्तितेतिदेवीभागवतम् । राधोतिसाधयतीत्यर्थ : ॥ नद्यादयत्वाम् ॥ यथा । चन्द्राचयामेहिरावत्सवाविष्णुशिवादय : । वै घ्याशसांनष्टाःलक्ष्मीपरांराधांवदन्तिते ॥ यदर्दाब्रानसंभवाञ्चाभो : प्रियानारायणस्यच ॥ धन्विनांविषभेदे । वैधविशेषे ॥ विशाखानक्षत्रे ॥ आमलक्याम् ॥ विष्णुक्रान्तायाम् ॥ विद्युति ॥ राधोति

कार्यमनया । राधसंसिद्धौ ! गुरौ चहलद्व्यकार : ॥ यद्वा । राधयति । अच् । टाप् ॥

राधाकान्त : । पुं॰ श्रीकृष्णे ॥

राधाकृष्ण : । पुं॰ राधाऽविनाभूतकृष्णे । श्रीकृष्णे । द्विभुजे। मुरलीधरे ॥ राधानामोच्चारणानन्तरं कृष्णनामोच्चारणे विधिर्यथा । नारद उवाच । आदौराधांसमुच्चार्यपश्चात् कृष्णं विदुर्बुधा : ॥ निमित्तमस्यमाभक्तं वदभक्तजनप्रिय ॥ श्रीनारायण उवाच । निमित्तमस्यत्रिविधं कथयामिनिशामय, जगन्माताचप्रकृति : पुरुषश्चजगत्पिता ॥ गरीयसीतिजगतांमाता शतगुणै : पितु : । राधाकृष्णे तिगोरीशेत्येवं शब्द : श्रुतौश्रुत : ॥ कृष्णराधेशगौरीतिलोकेन चकदाश्रुत : । प्रसीदरोहिणीचन्द्रगृहाणार्घ्यमिदं मम । गृहाणार्घ्यंमयादत्तं संज्ञया सहभास्कर । प्रसीदकमलाकान्त गृहाणममपूजनम् ॥ इतिदृष्टं सामवेदेकौथुमेमुनिसत्तम । राधब्दोच्चारणादेव स्फीतोभवतिमाधव : । धाराब्दोच्चारत : पश्चाद्धावत्येव ससम्भ्रम : । आदौपुरुषमुच्चार्य पश्चात्प्रकृतिमुच्चरेत् । सभवेन्मातृगामीचवेदातिक्रमणे मुने ॥ इ॰ ब्र॰ वै॰ पु॰ ॥

तत्खरदूषणं जयेत् ॥ दीपतेतुथा बलानुमानतः सद्यएवजठराग्नि-दीपनः । रोचकः कफाकुलान्तकारकः श्वासकासवसिजन्तुनाशनः ॥ पारदभागः १ विषभागः १लवङ्गभागः १ गन्धकभागः १ मरिचभागाः ८ जातीफलभागौ २ रामबाणोरसोऽभीष्टः ॥ रामस्यशरे। रामशरे ॥

रामवीणा । स्त्री० वीणाप्रभेदे ॥

रामशरः । पुं० शरतृणभेदे ॥ रामकाण्डे ॥

रामशीतला । स्त्री० आरामशीतलायाम् ॥

रामसखः । पुं० सुग्रीवे ॥ रामस्य सखा । टच् ॥

रामसेनकः । पुं० भूनिम्बे ॥ कटफले ॥

रामह्रदः । पुं० तीर्थविशेषे ॥

रामा । स्त्री० उत्कृष्टयोषिति । रमते क्रीडताभिरिति० रमयतिपुरुषमितिवा पुरुषरमणकारिण्यामबलायाम् ॥ रम० । ज्वलादित्वाण् ॥ हिङ्गुलिन्याम् । कष्टकार्याम् ॥ गृष्टकन्यायाम् ॥ आरामशीतलायाम् ॥ भार्याके ॥ गोरोचनायाम् ॥ गैरिके ॥ हिंगुले ॥

रामानुजः । पुं० लक्ष्मणे ॥ श्रीकृष्णे ॥ आधुनिकवैष्णवसम्प्रदाये ॥ न० तिलकविशेषे ॥ यद्दृष्ट्वा पुण्ड्रं तिलकं शोभनं तन्मनोहरम् । तन्मध्यपीतरेखं च श्रीमद्रामानुजं विदुः ॥

रामायणम् । न० वाल्मीकीयमहाकाव्ये । इक्ष्वाकुवंशसम्भूतमहदाख्याने । रामेण रावणवधाख्ये । कुशलवोपदिष्टचतुर्विंशतिसहस्रश्लोकसङ्ख्याकमादिकाव्ये ॥ यथा । प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥ चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः । तथा सर्गशतान् पञ्च षट् काण्डानि तथोत्तरम् ॥ तथा शतकोटिसङ्ख्यामपि । चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं पुंसां महापातकनाशनम् ॥ तत्तु सम्पूर्णं ब्रह्मलोके स्थितमित्यैतिह्यम् ॥ रामस्य अयनं चरितम् । पूर्वपदादिति णत्वम् ॥

रामालिङ्गनकामः । पुं० रक्ताम्लाने ॥

रामावचनीयमः । पुं० चक्रवाके ॥

रामावरजः । पुं० लक्ष्मणे ॥ श्रीकृष्णे ॥

रामिलः । पुं० रमणे ॥ कामे ॥

राम्भः । पुं० व्रतिभिर्धार्यवैणवदण्डे ॥ रम्भस्य वंशस्य विकारः । पलाशादिभ्योविकल्प् ॥

रायभाटी । स्त्री० वाचो० इ० गौ० प्र० । नदीस्रोतोविशेषे ॥

रिक्षस्य समष्टीकक्षास्याधः स्थितश्च । मध्यकक्षयाभागामध्यान्तोल्पास्तथाल्पया ॥ कालेनाल्पेन भगणं भुङ्क्तेऽल्पममध्याश्रितः । यः कालेन महता मण्डले महति भ्रमन् ॥ स्वऽल्पयातु बहून् भुङ्क्ते भगणान् शीतदीधितिः । महत्या कक्षयागच्छन् ततः स्वल्पं शनैश्चरः ॥ मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः । वर्षाधिपतयस्तद्वत्तृतीयाः परिकीर्त्तिताः ॥ ऊर्द्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः ॥ होरेशाः सूर्य्यतनयादधोधः क्रमशस्तथा ॥ भवेद्भकक्षा तिग्मांशोर्भ्रमणं षष्टिताडितम् । सर्वोपरिष्टाद्भ्रमति योजनैस्तैर्भमण्डलम् ॥ तत्कक्षाक्रममाह । ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते । तन्मध्ये भ्रमणं भानामधोधः क्रमशस्तथा ॥ मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोधः स्थाः सिद्धविद्याधरा घनाः ॥ रविर्मासं निशानाथः सपाददिवसद्वयम् । पक्षत्रयं भूमिपुत्रो बुधोष्टादशवासरान् ॥ वर्षमेकं सुराचार्य्यः षष्टाविंशद्दिनं भृगुः । शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम् ॥ एवं प्रमाणात् सकलाः खराशिं भुञ्जते ग्रहाः ॥ इतिराशिभोगः ॥

राशिविभागः । पुं॰ अश्विन्यादिनक्षत्रैर्मेषादीनां विभजने ॥ यथा । सपादद्वयनक्षत्रैरश्विन्यादिभिरेव च । राशयः कथिताः प्राज्ञैर्मेषादिद्वादशक्रमात् ॥ तथाहि । अश्विनीभरणीकृत्तिकापादो मेषः १ । कृत्तिकाशेषपादत्रयं रोहिणी मृगशिरोर्द्धञ्च वृषः २ । मृगशिरःशेषार्द्धमार्द्रा पुनर्वसुपादत्रयं मिथुनम् ३ । पुनर्वसुशेषपादैकं पुष्याश्लेषा कर्कटः ४ । मघापूर्वफल्गुन्युत्तरफल्गुनीप्रथमपादः सिंहः ५ । उत्तरफल्गुनीशेषपादत्रयं हस्ता चित्रार्द्धं कन्या ६ । चित्राशेषार्द्धं स्वाती विशाखापादत्रयं तुला ७ । विशाखाशेषैकपादोऽनुराधाज्येष्ठा वृश्चिकः ८ । मूलं पूर्वाषाढोत्तराषाढाप्रथमपादो धनुः ९ । उत्तराषाढाशेषपादत्रयं श्रवणा धनिष्ठार्द्धं मकरः १० । धनिष्ठाशेषार्द्धं शतभिषा पूर्वभाद्रपादत्रयं कुम्भः ११ । पूर्वभाद्रशेषपाद उत्तरभाद्ररेवती मीनराशिः १२ । रिति ॥ उक्तञ्च । सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुगम् । तदष्टांशो भवेद्राशिर्नवर्क्षचरणाङ्कित इति ॥

राष्ट्रः । पुं॰ न॰ उपवर्त्तने । चक्रे । नीवृति । देशे । विषये ॥ उपद्रवे

॥ राजति । राज् । ष्ट्रन् । व्रश्चेति षः ॥

राष्ट्रनिवासी । त्रि॰ जानपदे । देशवासिनि ॥

राष्ट्रिका । स्त्री॰ कण्टकारिकायाम् ॥ राष्ट्रमस्यस्थाः । अतट्ठगिठना वितिठन् ॥

राष्ट्रिय : । पुं॰ नाट्योक्त्या राजश्याले ॥ राष्ट्रेऽधिकृतः । राष्ट्रावारपारा द्‍घखाविति घः । घस्येयादेश : ॥

राष्ट्रीय : । पुं॰ राष्ट्रिये ॥ त्रि॰ राष्ट्रसम्बन्धिनि ॥

रास : । पुं॰ क्रीडाविशेषे ॥ ध्वनौ ॥ भाषाशृङ्खलके ॥ विलासे । गोपानां गोपीभिः सहक्रीडाविशेषे । रासते । रासशब्दे । घञ् ॥ गव्यंवे ॥

रासगोष्ठी । स्त्री॰ हल्लीषके । तल्लक्षणं यथा । पृथुसुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शङ्कुम् । आक्रम्य पद्भ्यामितरेतरन्तु हस्तैर्भ्रमोयत्खलु रासगोष्ठीतिहरिवंशटीकायां नीलकण्ठः ॥

रासन : । पुं॰ रसे ॥ रसनया गृह्यते । ग्रहणकृत्यण् ॥

रासभ : । पुं॰ गर्द्दभे । रासते । रास॰ । रासिवल्लिभ्याञ्च अभच् ॥

रासभवन्दिनी । स्त्री॰ मल्लिकायाम ॥

रासभी । स्त्री॰ गर्द्दभ्याम् । गधी॰ इ॰ भा॰ ॥ जातित्वान्ङीष् ॥

रासमण्डलम् । न॰ श्रीकृष्णस्य रासक्रीडास्थले ॥

रासेरस : । पुं॰ रासगोष्ठ्याम् ॥ रासे ॥ शृङ्गारे ॥ रससिद्धौ ॥ रसावासे ॥ पल्लीजागरणे ॥ उत्सवे ॥ परिहासे ॥

रासेश्वरी । स्त्री॰ राधायाम् ॥

रास्ना । स्त्री॰ स्वनामख्यातलताविशेषे । नाकुल्याम् । सुरसायाम् । भुजङ्गाख्याम् । रास्ना॰ नेत॰ इ॰ भा॰ प्र॰ ॥ रास्नात्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा । ज्ञेयैन्मूलं वदन्ति श्रेष्ठं पत्रं च मध्यमा ॥ इ॰ रा॰ नि॰ ॥ अपिच । नाकुली सुवहा तिक्ताकटुर्वीर्याविनाशयेत् । भोगिलूताखुविषज्वरहानि व्रणान् ॥ इ॰ भा॰ प्र॰ ॥ रास्ना शोथामवातघ्नी तिराज्ञवल्लभा ॥ एलावती॰ इ॰ दे॰ भा॰ प्र॰ औषधिविशेषे । एलापर्ण्याम् । सुवहायाम् । युक्तरसायाम् । कांटाभामकली॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यागुणाः यथा । रास्नामपाचनी तिक्ता गुरूष्णा कफवातजित् । शोथश्वाससमीरास्रवातशूलोदरापहा ॥ कासज्वरविषाशीतिवातिकामयहिध्महृत् ॥ राति॰ रायतेवा । रासते॰ रसतेवा । रादाने । रसया स्वादने॰ रासशब्देवा । रास्नासास्नेतिसाधुः ॥

राहु: । पुं० तमोग्रहे । स्वर्भानौ । सैंहिकेये । रहति० गृहीत्वात्यजति चन्द्रार्कौ । रहत्यागे । बाहुलकाद्उण् ॥

राहुगृहम् । न० कन्याराशौ ॥ राहोर्गृहम् ॥

राहुग्रह: । पुं० )

राहुग्राह: । पुं० ) उपरागेचन्द्रसूर्यग्रहणे ।

राहुच्छत्रम् । न० आर्द्रके ।

राहुदर्शनम् । न० राहोःयाकुपला ने । ग्रहणे ॥

राहुभेदी । पुं० विष्णौ ॥

राहुमूर्द्धभित् । पुं० केशवे ॥

राहुरत्नम् । न० गोमेदके ॥

राहुलसू: । पुं० बुद्धे । सुगते ॥

राहुस्पर्श: पुं० उपरागे ।

राहुहा । पुं० विष्णौ ॥

राहूच्छिष्ट: । पुं० )

राहूत्सृष्ट: । पुं० ) लशुने ॥

रिक्त: । त्रि० शून्ये ॥ यथा । रिक्तहस्तो नमोपेयाद्राजानंदैवतांगुरुमिति ॥ निर्धने ॥ न० वने ॥ रिच्यतेस्म । रिचवियोजनसम्पर्चनयो: । क्त: ॥

रिक्तकम् । त्रि० शून्ये ॥ स्वार्थे कन् ॥

रिक्ता । स्त्री० चतुर्थीनवमीचतुर्दशीषु तिथिषु ॥

रिक्थम् । न० धनमात्रे । वसुनि । रिच्यते । रिचिर्विरेचने । पातॄतुदिवचिरिचीतिथक् ॥

रिक्थहारी । त्रि० दायादे ॥

रिक्थाद: । पुं० पुत्रे ॥

रिक्थी । त्रि० धनहारिणि ॥

रिखा । स्त्री० लिखायाम् । लीख० इ० भा० इतिहेमचन्द्र: ॥ लख्यते । लखशालोषणे । घञ् । पृषोदरादि: ॥

रिङ्खणम् । न० स्खलने । धर्मादिस्खलने ॥ बालानांहस्तपादाभ्यांचलने । रिखियतौ । भावेल्युट् ॥

रिङ्गणम् । न० स्खलने ॥धर्मादिस्खलने ॥ बालानांहस्तपादाभ्यांचलने । रींगणा० इ० भा० प्र० ॥ कौशिकात्पिच्छिलादिव स्खलनं रिङ्गणं विदुः ॥ रिगिगतौ । भावेल्युट् ॥

रिङ्गम् । त्रि० जानुभ्यांगच्छति । गच्छति ॥

रिधम: । पुं० कामे ॥ वसन्ते ॥

रिपु: । पुं० शत्रौ । अहितकारिणि ॥ आभ्यन्तरारिपवोयथा । कामक्रोधौलोभमोहौमदोमात्सर्यएव च । आभ्यन्तराद्रमीप्रोक्तारिपवस्तत्ववेदिभि: ॥ अनित्या: शत्रवोबाह्याविप्रकृष्टास्तथैवरा: । अत: सोभ्यन्तरान्नित्यान्षट्पूर्व्वमजयद्रिपून् । अनिष्टंरपति । रपव्य

क्तार्थवाचि । रषेरित्वोपधायाङ्कित्सु : ॥ लशुनात्प्रथमभवने ॥ चोरक नामगन्धद्रव्ये ॥
रिपुघातिनी । स्त्री॰ लताविशेषे । कुचिकायाम् । कुचुरू॰ गौ॰ दे॰ भा॰ प्र॰ ॥ शत्रुनाशकारिण्याम् ॥
रिपुद : । पुं॰ दुर्घिवोत्तरदारस्थे ॥
रिपुभम् । न॰ षष्ठराशौ ॥
रिप्फम् । न॰ व्ययभवने ॥
रिप्र : । वि॰ अधमे । कुत्सिते ॥ रीयते । रीङ् स्रवणे । लीरीङोर्ह्रस्वः पुट् चतरौ शिल्पसञ्ज्ञयोरिति रप्रत्ययोधातोर्ह्रस्व : प्रत्ययस्य पुट् च ॥
रिभेद : । पुं॰ अरिमेदे ॥
रिरंसा । स्त्री॰ रन्तुमिच्छायाम् ॥ रमे : सन् ॥ अप्रत्ययात् । टाप् ॥
रिरंसु : । वि॰ रन्तुमिच्छौ ॥ रमे : सन्नन्तादुप्रत्यय : ॥
रिरक्षा । स्त्री॰ रक्षितुमिच्छायाम् ॥
रिरक्षिषु : । वि॰ रक्षितुमिच्छौ ।
रिरी । स्त्री॰ पित्तले ॥
रिश्य : । पुं॰ मृगे ॥
रिष्ट : । पुं॰ खड्गे ॥ फेनिले । रीठा॰ इ॰ भा॰ ॥ न॰ एनसि । पापे ॥ क्षेमे । कुशले ॥ अशुभे । अकल्याणे ॥ अभावे । नाशे ॥ क्षेमाशुभाभावेषु ॥ रेषणम् । रिष्यतेर्भावे क्त : ॥ रिषहिंसायाम् । क्त : ॥
रिष्टक : । पुं॰ फेनिले । रीठा॰ इ॰ भा॰ ॥
रिष्टि : । पुं॰ खड्गे । असौ ॥ स्त्री॰ शुभे ॥ रेषति । रिष॰ क्तिच् ॥
रिप्फम् : । न॰ व्ययभवने ॥
रिश्य : । पुं॰ मृगभेदे ॥ रिष्यति । रिष॰ । अघ्न्यादित्वात्साधु : ॥
रिश्व : । वि॰ हिंस्रे ॥ न॰ शस्त्रे ॥ रिष्यतेऽनेन । रिष॰ । सर्वनिघृष्वरिष्वेतिसाधु : ॥
री । स्त्री॰ गतौ ॥
रीठा । स्त्री॰ रीठाकरञ्जे ॥
रीठाकरञ्ज : । पुं॰ करञ्जसदृशे । गुच्छके । गुच्छपुष्पके । गुच्छफले । फेनिले ॥
रीठक : । पुं॰ पृष्ठवंशे ॥
रीढा । स्त्री॰ अवमाननायाम् । अवज्ञायाम् ॥ रेहणम् । रिहवधे । औणादिक : क्त : । लीरंलोमात् ॥
रीण : । वि॰ स्रुतजलादौ । क्षरिते । स्रुते ॥ रीयतेस्म । रीङ् स्रवणे । क्त : । ल्वादयश्वोदित : । ओदितश्चेतिनत्वम् ॥ धौर्ये ॥
रीति : । स्त्री॰ स्यन्दे । गतौ ॥ प्रचारे ॥ लोहकिट्टे ॥ दग्धस्वर्णादिमले ॥ सीमनि ॥ स्रवणे ॥ स्वभावे । रूपे । लक्षणे । भावे । आत्म

न्य ॥ पथ्यौ ॥ न॰सौवर्चले ॥ त्रि॰ मनोज्ञे । सुन्दरे ॥ रोचते॰ रुच्यते वा । रुच॰ । राजसूयेतिसाधुः ॥

रुच्यकन्द । पुं॰ सूरणे ॥

रुज् । स्त्री॰ रोगे ॥ रुजतिदेहम् । रु- जोभङ्गे । क्विप् ॥ रोजनवा, सम्प दादिक्विप् ॥ कुष्ठौषधौ ॥

रुजा । स्त्री॰ रोगे ॥ भङ्गे । रुजति । रुजो॰ । भिदादिपाठात्॰रुजार्था- नामितिनिर्देशाद्वाऽङ्किटाप् ॥ रु गुणचेतिकोश । कुष्ठे ॥ मेष्याम् ।

रुजाकरः । पुं॰ व्याधौ । न॰कर्मर कफले ॥ त्रि॰पीडाकारिणि ॥

रुजासहः । पुं॰ धन्वनवृक्षे ॥

रुणस्करा । स्त्री॰ सुभगायाम् । सुख- सन्दोह्यायांगवि ॥

रुण्डः । पुं॰ कबन्धे ॥

रुण्डिका । स्त्री॰ द्वारपिण्डाम् । देह ल्याम् ॥ दूतिकायाम् ॥ रणभूमौ ।

रुतम् । न॰ वाशिते । तिरश्चांशब्द कूजिते ॥

रुदथः । पुं॰ कुक्कुटे ॥ शुनि ॥ शि शौ । रोदिति । रुदिर्‌अश्रुविमोच ने । रुदिविदिभ्यांङिदित्यथः ॥

रुदन्तिका । ) स्त्री॰

रुदन्ती । ) स्त्री॰ क्षुद्रक्षुपविशेषे । स्रवत्तोयायाम् सञ्जीवन्याम् । रो माञ्चिकायाम् । चणपत्र्याम् । च णाः स्वरूपपत्रा । चणपत्रसमंप

त्रं यस्य पत्रैवतथाक्षृतिः । शैशिरेज लबिन्दूनांस्रवन्तीतिरुदन्तिका ॥ रु दन्तीवह्निकृद्‌ध्यादिक्तातीवरसायनी ॥

रुदितम् । न॰ क्रन्दिते । क्रुष्टे ॥ रु- दिर्॰ । भावेक्तः ॥ त्रि॰तद्वति ॥

रुद्धः । त्रि॰ नद्योप्राकारादिनाकृतवे ष्टने । वेष्टिते । वलयिते । संवी- ते । घाते । कथ्यते । रुधिर्‌- आवरणे । क्तः ॥

रुद्रः । पुं॰ गणदेवताविशेषे । एका- दशरुद्रेषु । तेषांनामानियथा । अजैकपादहिर्बुध्नोविरूपाक्षोथरैव- त. । हरश्चबहुरूपश्चत्र्यम्बकश्चसुरे- श्वरः । सावित्रश्चजयन्तश्चपिनाकी चापराजितः । एतेरुद्राः समा ख्याताएकादशगणेश्वराः । एते षांमानसानांतु त्रिशूलवरधारिणा म् । कोटयश्चतुराशीतिस्तत्पुत्रा श्चाक्षयामताः ॥ दिक्षुसर्वासुये रक्षांप्रकुर्वन्तिगणेश्वराः ; पुत्रपौत्र सुताश्चैतेसुरभीगर्भसम्भवाः ॥ इतिमात्स्ये ५ ध्यायः ॥ शिवे । शम्भौ । ईशे । रोदयत्यसुरान् । संहारकालेप्रजाः संहरन्रोदय तिवा । रुदिर्॰ । रोदेर्णिलुक्‌च तिरक्‌ खलुक् ॥ सर्वगसरुधांद्रा वणात्॰ रोदनद्रवनाद्वारुद्रः । त थाचस्कान्दे । रुजः सर्वगता

यस्माद्द्रावयामि जगत्त्वहम्। रोदनं
हन्मि यस्माच्च रुद्रस्तस्मादहं प्रिये ॥
यद्वा। रुतं वेदात्मकं शब्दं कल्पादौ
ब्रह्मणे राति• ददाति। रा दाने।
आतोनुपसर्गे क: ॥ यद्वा। रुता
नादेन सकलं जगदिदं द्रावयति लय
यतीति• नादात्मकत्वाद्रुद्र ॥ यद्वा।
रुतानादेन• प्रणवरूपेण• वेदरूपेण
वा• द्रापयति•• इष्टमर्थमिति रु
द्र'' यद्वा। रुतं संसारदु:खं तद्वे तु-
र्द्रावयतीति रुद्र: तदुक्तं तद्दु:
खम्रुतं तु विद्रावयति य: प्रभु:
। रुद्र इत्युच्यते तस्माच्छिव: परम
कारणमिति ॥ विष्णुरुद्रयोरभेदो
यथा श्रीमें। सर्वदेवो भगवान्भ
वादिवोनसंशय:। मन्यन्ते येजग
योनिं विभिन्नं विष्णुमीश्वरात् ॥
मोहादवेदनिष्ठा: तेयान्तिनरकं
नरा:। वेदानुवर्तिनं रुद्रं देवं ना
रायणं तथा। एकीभावेन पश्यन्ति
मुक्तिभाजो भवन्तिते। श्रीमद्भागवते
द्वित्यादौ रुद्रोपरि कीर्तितो। यथा।
कृष्णस्य ब्रह्मणो वक्त्राद्दुर्दाभाय सुद्र
भौ। मूलरुद्रांशभूतो रुद्रनामा
द्वितीयकश्रुति ॥ आदित्यपत्रकश्च
॥ एकादशार्द्ध ॥ न० रौद्ररसे ॥
रुद्रकोटी। स्त्री० तीर्थविशेषे ॥
रुद्रगण:। पुं० शिवपार्षदसमूहे ॥
रुद्रचण्डी। स्त्री० रुद्रयामलोक्तदेवी
माहात्म्ये ॥
रुद्रज:। पुं० पारदे ॥
रुद्रजटा। स्त्री० लताविशेषे। रौद्र्याम्।
सौम्यायाम्। सुगन्धायाम्। सुपत्रा
याम्। सुगन्धपत्रायाम्। पत्रवल्ल्या
म्। जटावल्ल्याम् ॥ अस्यागुणा:। क
टुरसत्वम्• श्वासकासहृद्रोगभूत
रक्षोनाशित्वञ्चेति ॥
रुद्रपत्नी। स्त्री० चण्ड्याम्। दुर्गा
याम् ॥ अतस्याम् ॥
रुद्रप्रिया। स्त्री० हरीतक्याम् ॥ रुद्रा
ण्याम् ॥
रुद्रवीणा। स्त्री० सङ्गीतनारायणो
क्तवीणाविशेषे। रुद्राम् ॥
रुद्रसर्ग:। पुं० रुद्रकर्तृकभूतवेता
लादिसृष्टौ ॥
रुद्रसावर्णि:। पुं० द्वादशमनौ ॥
रुद्रसू:। स्त्री० एकादशपुत्रप्रसवाम् ॥
रुद्राक्रीड:। पुं० श्मशाने ॥
रुद्राक्ष:। पुं० स्वनामाख्यप्रसिद्धवृक्षे।
तृणमेरौ। चमरे। पुष्पचामरे।
अक्षफले। शिशार्घे। सर्पाक्षे। भ
स्मनाम्ने ॥ विना भस्मत्रिपुण्ड्रेण
विना रुद्राक्षमालया। पूजितोपि
महादेवो न स्यात्तस्य फलप्रद: ॥ वि
नामन्त्रेणयो धत्ते रुद्राक्षं भुवि मान
व:। सयाति नरकान् घोरान् यर
वदिन्द्राश्चतुर्दश इतिपद्मपुराणम् ॥
रुद्राक्षान् कण्ठदेशे दशन ३० परि

मितान्० मस्तकेविंशतिदे ४० घ ट् ६ पट् ६ कर्णप्रदेशे० कण्ठ गलकृतेद्वादशे १२ द्वादशे १२ व । वाद्धेरिन्दो : कलाभि १६ नं यनयुगकृतेर्व्वे क १ मेकं १ शिखा याम्० वक्षस्यष्टाधिकं च : कलय सियतकं १०८ स्ययंनीलकण्ठ : द्विदिवेभागवतम् ॥ मन्त्रेणेति शिष्टं तरविघयम् । सर्वाश्रमाणांव र्णानांरुद्राक्षधारणम् । कर्त्त व्यंमन्त्रत : प्रोक्तं द्विजानांनान्यव- र्णिनामितिनारायणवचनात् ॥

रुद्राणी । स्त्री० शिवायाम् । भवा न्याम् । सर्वमङ्गलायाम् ॥ रुद्रस्य स्त्री० इन्द्रवरुणभवसर्वरुद्रमृडहि- मारण्ययवयवनमातुलाचार्याणामा नुगिति० ङीष्आनुकौ ।

रुद्रावर्त्त : । पुं० तीर्थविशेषे ॥ वह्नि कूटस्थानस्यायंपरमैश्वर्यम् । रु- द्रजटायाम् ॥

रुद्रास्पदम् । न० तीर्थविशेषे ॥

रुद्री । स्त्री० रुद्रवीणायां ॥

रुधिर : । पुं० कुङ्कुमे । कुजे । भौ मे । मङ्गलग्रहे ॥ न० कुङ्कुमे ॥ श- रीरस्थरसभवधातौ । रक्ते । अ- स्रे । त्वग्जे । शोणिते । असृजि । लोहि० इ० भा० ॥ रुधादि० रुध्यते वा । रुधिर् ० । इषिमदिमुदीति- किरच् ।

रुधिराख्यम् । न० मणिभेदे । यथो क्तं गरुडपुराणे । हुतभुग्रूपमादा यद्दानवस्यवधेप्सितम् । नर्मदायां- निचिक्षेपकिञ्चिदीनादिभूतले ॥ तत्रेन्द्रगोपकलितंशुकवक्त्रवर्णसं- स्थानत : प्रकटपीलुसमानमात्र- म् । नानाप्रकारविहितंरुधिराख्य- रत्नमुद्भूयतस्खलुसर्वसमानमेव ॥ मध्येन्दुपाण्डरमतीवविशुद्धवर्णंत च्चेन्द्रनीलसदृशंपटलंतुविद्यात् । सैश्वर्यभृत्यजननंकथितंतदेवपक्वञ्च तत्खलुभवेत्सुरवज्रवर्णम् । इति गारुडे ॥ ७८ । अध्याय : ॥

रुधिरोद्गारी । पुं० षष्टिसंवत्सराणां मध्येवत्सरविशेषे ॥ तत्फलंयथा । भविष्योत्तरे हिरण्यादिताम्रकांस्यादा शेषत : । तत्सर्वंविक्रीयकार्त्त व्यौधान्यसंग्रह : ॥ रक्ते संवत्सरेदे- विक्रूरबुद्धिर्नराधिप: । मानवा: क्रूर चेष्टाश्चतडागसेतुलयोभवेत् ॥ ५८ ॥

रुमण्वान् । पुं० लवणाचले ॥ लव- णमस्त्यस्मिन् । मतुप् । आसन्दी- वदिति० लवणस्यरुमण्भाव : ॥ च णावाकरवाचकरुमन्शब्दस्येतन्निपा तनंनलोपाभावार्थंचप्रत्यार्थेऽप्यपि मतम् ॥

रुमा । पुं० लवणाकरे ॥

रुमा । स्त्री० सुग्रीवदारेषु ॥ विशिष्टल वणाकरे ॥

रूढः

रूढः । पुं० प्रकृतिप्रत्ययाद्यर्थमनपे-
क्ष्यशाब्दबोधजनकशब्दे ॥ यथा । सु
व्योलाघविकोगौणः शब्दः स्वा-
दौपचारिकः । यौगिकोयोगरूढो
वारूढोवामुख्यएवसः ॥ इतिशा-
ब्दिकाः । अपिच । रूढमाल्यव-
ति० विभक्तेप । रूढं संकेतवन्नाम
सैवसंज्ञेतिकीर्त्यते । नैमित्तिकीपा
रिभाषिक्यौपाधिकीपरिच्छिदा । य
न्नामंयादृगर्थसंकेतितमेव० नतुयौ
गिकमपि० तद्रूढम् । योगरूढन्तुप-
ङ्कजादिकंनतद्यारूढानामेवचसंज्ञाप
देनाभिलप्यते । नतुरूढादिवत्सं-
ज्ञानाम्नोऽवान्तरभेदः । येनविभा
गव्याघातः स्यात् । संज्ञायाश्चत्रयो
भेदाः नैमित्तिकीपारिभाषिकी० औ
पाधिकीचेति । पाचकपाठकादय-
स्तुनसंज्ञाः सङ्केतशून्यत्वात् ॥ ये-
तुरूढस्यनाम्नश्चतुर्विधत्वमाहुस्तन्म
तमुपन्यस्यति । जातिद्रव्यगुणक-
र्मभिर्धर्मैः सङ्केतवत्तया । जाति
शब्दादिभेदेनचातुर्विध्यं परेजगुः ॥
गोगवयादीनांगोत्वादिजात्या । इ
न्द्रादीनांकाण्डधनादिद्रव्ये-
ण । धवलपिशुनादीनांशुक्लरूपादि
गुणेन । चलनपतनादीनांसशब्दानां
कर्मणाऽवच्छिन्नत्वमस्त्वेवचातुर्वि
ध्यमेवरूढानामिति । यदुक्तं दृष्टा-
पार्थैः । शब्दैरेवप्रतीयन्ते जाति-

द्रव्यगुणक्रियाः । चातुर्विध्यादमी
षान्तुशब्दउक्तश्चतुर्विधइति । सङ्के-
तस्तुडमूर्खादीनामन्यशून्यादीना-
सशब्दानामपरिच्छेद्यापरिच्छे-
द्यसमासाभिः ॥ नैमित्तिकसंज्ञाल-
क्षयति । साध्यवच्छिन्नसङ्केतवती
नैमित्तिकीमता । जातिमात्रेविस
ङ्केताद्व्यक्तेर्भानंसुदुष्करम् ॥ यन्ना
मजात्यवच्छिन्नसङ्केतवत्सानैमि-
त्तिकीसंज्ञा । यथागोचैत्रादिः ।
साहिगोत्वचैत्रादिजात्यवच्छिन्ने
वगवादिकमभिधत्ते नतुगोत्वादि-
जातिमात्रम् । गोपदंगोत्वेसङ्केति
तमित्याकारकग्रहान्नामानयेत्यादौ
गोत्वादिलाभादेरन्यथानुपपत्तेः
एकग्रहत्वपदस्यान्यानुभावकत्वेऽ
तिप्रसङ्गात् । पारिभाषिकीमौ-
पाधिकींसंज्ञांक्रमेणलक्षयति । उ
भयावृत्तिधर्मेणसंज्ञास्यात्पारिभा
षिकी । औपाधिकीत्वनुगतोपाधि
नायाप्रवर्त्तते ॥ उभयावृत्तिधर्माव
च्छिन्नसङ्केतवतीसंज्ञापारिभाषि-
की । यथाकाशडित्थादिः ॥ यथा
नुगतोपाध्यवच्छिन्नसङ्केतवतीसं-
ज्ञासात्वौपाधिकी । यथाभूतदता
दि । साहिसर्वेतनयुक्तविशेषगुणव
त्वावत्कार्यत्वानुगतोपाधिपुर
स्कारेणैवप्रवर्त्तते । इतिशब्दशक्ति
प्रकाशिका च० जाते । प्रसिद्धे ।

रुहैर्गैत्यर्थैतिक्तः । ढत्वधत्वष्टुत्वढ लोपदीर्घः ॥

रूढपद् : । त्रि० यवमूले ॥

रूढिः । स्त्री० शिष्टप्रयोगे । प्रसिद्धौ ॥ अनादिव्यवहारसिद्धसम्बन्धवि शेषे ॥ मुख्यशब्दस्य संभेदे ॥ सा चस्वरूपैयगाव्यागुणेन वाभिर्देशा देव वस्तुनि संचारं विसृज्य तेमप्रव र्त्तते । यथा । डित्थः डवित्थः गौः शुक्ल इति ॥ रूढशब्दनिष्ठश क्तौ ॥

रूपम् । न० वाच्याकारे । स्वभावे । सौन्दर्ये । मनोहराकृतौ । तल्लक्ष णं यथा । अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येनभूषितव द्भान्ति तद्रूपमिति कथ्यते ॥ इत्यु ज्ज्वलनीलमणिः ॥ नाणके । पश ौ ॥ पशौ ॥ शब्दे । ग्रन्थावृत्तौ नाटकादौ ॥ आकारे ॥ श्लोके ॥ अवकाशादिभिन्नपदार्थे नानाविकार विशेषे ॥ रूपन्तु षोडशविधं मोक्ष धर्मे प्रकीर्त्तितम् । यथा । ह्रस्वम् १ दीर्घम् २ स्थूलम् ३ चतुरस्र म् ४ वृत्तम् ५ शुक्लम् ६ कृष्णम् ७ नीलारुणम् ८ रक्तम् ९ पीतम् १० कठिनम् ११ चिक्कणम् १२ श्लक्ष्णम् १३ पिच्छलम् १४ मृदु १५ दारुणं १६ मिति ॥ चक्षुर्मा त्रग्राह्ये गुणे ॥ तच्च शुक्लनीलपीत



रक्तहरितकपिशचित्रभेदात्सप्तवि धम् ० पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरं शु क्लं जले । शुक्लं भास्वरं तेजसि ॥ मा षामाषे ०।० ॥ त्रि० उत्तरपदस्थि ध्यात्मसदृशे ॥ यथा पितृरूप पुत्रः मा तृरूपा कन्या ॥ प्रशंसे ॥ रूपयति वि मोहयति । रूपविमोहने । अद् ॥ यद्वा । रूप्यते ऽनेन । खच्यपि व्यपशब्दो तिसाधु ॥ रीतिका । रूपशब्दे । खष्पशिल्प्येति पः रीतेर्दीर्घश्च ॥ अतिरूपसुनिन्दितम् ॥

रूपकम् । न० नाटके । मूर्त्ते ॥ रूपि । काव्यालङ्कारे ॥ तल्लक्षणादि यथा । विषय्यभेदताद्रूप्यरञ्जनं वि षयस्य यत् । रूपकं तत्त्रिधाधिक्य न्यूनत्वानुभयोक्तिभिः ॥ अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् । अयमास्ते विना शम्भुस्तार्त्ती यीकविलोचनम् ॥ शम्भुर्विश्वमवत्वद्य स्वीकृत्य समदृष्टिताम् । अस्यामुखेन्दु नालमेवानन्दे किमिन्दुना ॥ सा ध्वीयमपरालक्ष्मीरसुधासागरोदिता । अयंकलङ्किनश्चन्द्रान्मुखचन्द्रोऽति रिच्यते ॥ सङ्ख्याविशेषे ॥ यथा । सप्ताचीर्षीच्यते शुक्लासातिलोक पर्वभवेत् । रूपकैर्दशभिः प्रोक्तः कालज्ञो नामनामतः ॥ त्रि० । मू र्त्तिमति ॥ पुं० । हढादिसप्तसु ॥

सेयथा। दृढ:प्रौढोऽयवयवरोविमयस्तुरङ्गम:। निशारुचा:प्रतिताल:कथित:सप्तरूपकोद्भुतिदामोदर:॥

रूपकभेद:। पुं॰ अभिनेयप्रकारे॥

रूपतत्त्वम्। न॰ शीले॥

रूपधारी। त्रि॰ सौन्दर्यविशिष्टे॥

रूपधेयम्। न॰ रूपे। रूपमेव।भागरूपनामभ्यां धेय:॥

रूपनाशन:। पुं॰ पेचके

रूपवान्। त्रि॰ आकारविशिष्टे।सौंदर्ययुक्ते॥

रूपस्कन्ध:। पुं॰ विषयप्रपञ्चे। वासनामयचित्तेन निरूप्यमाणे पुगन्धस्पर्शादिषु। पञ्चेन्द्रियेषु॥ रूप्यन्ते एभिर्विषया इति कर्मकरणव्युत्पत्तिभ्यां सविषयाणीन्द्रियाणि रूपस्कन्ध:। रूप्यमाणपृथिव्यादीनां बाह्यत्वेऽपि देहस्थत्वादिन्द्रियसम्बन्धादध्यात्मिकत्वम्॥

रूपाजीवा। स्त्री॰ वारस्त्रियाम्। वेश्यायाम्॥ रूपमाजीवो यस्या:॥

रूपामाली। स्त्री॰ वर्णवृत्तविशेषे॥ यथा। चत्वारो यस्या: कर्णा यान्ति च्छन्दसि झंकारं कुर्वन्तो भव्या वर्णा पादे राजन्ते रूपामालीवृत्तं तत्कान्तं॥ यथा। कल्याणं नित्यं नो कण्ठे साक्षाद्य: संध्यायं कुर्यात्। देवेन्द्राद्या: प्रीत्या सम्प्राप्ता: संसेवन्ते तत्पादा

भोजनम्॥

रूपास्त्र:। पुं॰ कामदेवे। रूपमस्त्रमस्य॥

रूपिका। स्त्री॰ श्वेतार्कवृक्षे॥ श्वेतार्कपुष्पे॥

रूपी। त्रि॰ रूपवति॥ मूर्तिमति॥

रूपेश्वरी। स्त्री॰ देवीविशेषे॥

रूप्यम्। न॰ आहतरजते॥ आहतहेम्नि॥ तारे। चन्द्रहासे। रजते चन्द्रलोहके। चांदी॰ इ॰ भा॰॥ अस्य लक्षणगुणादयो यथा। गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षमम्। वर्णाढ्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम्॥ असारायोग्यम्॥ कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्तितम्॥ सारणायोग्यम् रूप्यं शीतं कषायाम्लं स्वादुपाकरसं सरम्। वयस: स्थापनं स्निग्धं लेखनं वातपित्तजित्। प्रमेहादिकरोगांश्च नाशयत्यचिराद् ध्रुवम्॥ तारं शरीरस्य करोति तापं विड्बन्धनं यच्छति शुक्रनाशम्। वीर्यं बलं हन्ति तनोश्च पुष्टिं महागदान्पोषयति ह्यशुद्धम्॥ अथ शोधनविधि:॥ पत्रीकृत्य पचापि तारस्याग्नौ प्रतापयेत्। निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा। एवं रजतपत्राणां विशुद्धि: स

रुज्यतेपीड्यतेदेहोऽनेनेतिघञ्रोगः॥

रोगघ्नम्। न॰ औषधे। त्रि॰ रोगनाशके॥

रोगभूः। स्त्री॰ शरीरे॥

रोगराजः। पुं॰ पापरोगे। राजयक्ष्मणि॥ रोगाणांराजा। टच्॥

रोगलक्षणम्। न॰ निदाने॥

रोगशान्तकः। पुं॰ वैद्ये॥

रोगशिला। स्त्री॰ मनःशिलायाम्॥

रोगशिल्पी। पुं॰ शरालु॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ वृक्षविशेषे॥

रोगश्रेष्ठः। पुं॰ ज्वरे॥ रोगिपुत्रः॥

रोगहम्। न॰ औषधे। भैषज्ये॥

रोगहारी। पुं॰ चिकित्सके। वैद्ये॥ रोगंहरतितच्छीलः। सुपीति णिनिः॥ त्रि॰ रोगनाशके॥

रोगितरुः। पुं॰ अशोकवृक्षे॥

रोगी। त्रि॰ रोगयुक्ते। व्याधिते। आतुरे। अभ्यमिते। रोगार्त्ते॥ रोगमस्यास्ति। इनिः॥ अथवर्ध्यचिकित्सार्थंपरीक्षांरोगिणस्त्विह॥ तत्राहवाग्भटः। दर्शनस्पर्शनप्रश्नैःपरीक्षेतचरोगिणम्। आयुरादिदृशास्पर्शाच्छीतादेःप्रश्नतोऽपरम्॥ आयुरादीत्यनादिशब्दात् साध्यत्वाऽसाध्यत्वादिबोध्यम्। दृशा॰ दर्शनेन। अत्रसम्यदादिग्रहणं तिभाविज्ञेयम्। स्पर्शात्॰ शीतादेः। शीतोष्णमृदुकाठिन्यादिनापरीक्षणम्। प्रश्नतः। उदरस्याग्नेःसर्वगोरवलक्षणाऽलक्षणा॰ बुभुक्षाऽबुभुक्षाबलाऽबलादिना। मिथ्यादृष्टाविकाराहिदुराख्यातास्तथैवच। तथादुष्परिमृष्टाश्चमोहयेयुश्चिकित्सकान्॥ तत्स्पर्शनंनेत्रजिह्वामूत्रादेःकर्त्तव्यम्॥

रोगिवल्लभम्। न॰ भैषज्ये। औषधे। त्रि॰ रोगिप्रिये॥

रोग्यम्। त्रि॰ अपथ्ये। अहिते। रोगायहितम्। यत्। रोगसम्बन्धिनि।

रोचकः। पुं॰ क्षुधायाम्। भ्रमनायाम्। शिवस्रायाम्। कदल्याम्॥ राजपलाण्डौ॥ आम्रहंसे॥ ग्रन्थिपर्णभेदे। निशाचरे। धनहरे। क्लितघे। गन्धद्रव्ये। नैपालदेशभरित्ववर॰ इतिप्रसिद्धे॥ अस्यगुणाः। रोचकोमधुरस्तिक्तःकटुपाकःकटुर्लघुः। तीक्ष्णोऽग्नीर्हिमोहन्तिकुष्ठकासकफानिलान्॥ रक्षोऽश्मोऽर्शःस्वेदमेदोस्रज्वरगन्धविपन्नतान्॥ त्रि॰ रुचिकारके॥

रोचनः। पुं॰ कूटशाल्मलौ॥ श्वेतशिग्रौ॥ पलाण्डौ॥ आरग्वधे॥ करञ्जे॥ अङ्कोटे॥ दाडिमे॥ त्रि॰ रोचके। रुचिकरे। रोचते। रुचदीप्तौ। अनुदात्तेतश्चहलादेः इतियुच्॥

रोचयति । नन्द्यादित्वाल्ल्युर्वा
बहुलमन्यत्रापीतियुज्वा ॥
रोचनक : । पुं॰ जम्बीरे ॥
रोचनफल : । पुं॰ बीजपूरके ॥
रोचनफला । स्त्री॰ चिर्भिटायाम् ॥
रोचना । स्त्री॰ रक्तकह्लारे ॥ गोपि
त्ते ॥ वरयोषिति ॥ रोचते ।
रुच॰ । बहुलमन्यत्रापीतियुच् ।
टाप् ॥
रोचनिका । स्त्री॰ वंशरोचनायाम् ॥
शुण्डारोचन्याम् ॥
रोचनी । स्त्री॰ आमलक्याम् ॥ गोरोच
नायाम् ॥ मनः शिलायाम् ॥
श्वेतत्रिवृतायाम् ॥ काम्पिल्लौष
धौ ॥ रोचते । रुचदीप्तावभिप्रीतौ
च । कृत्यल्युटइतिल्युट् ॥
रोचमान : । पुं॰ अश्वग्रीवास्थरो
मावर्त्ते ॥ यथा । ग्रीवयोरुद्गमा
र्त्तोरोचमानोऽशुभप्रद इतिचिका
रुडशेष: ॥ अपिच । कल्पजोरोच
मानस्तस्मिस्तीभाग्यवर्द्धनइतिवै
जयन्ती ॥ त्रि॰ अत्यन्तं दीप्यमाने
॥ रोचते । रुच॰ । लट : शानच्
। आनेमुक् ॥
रोचित : । त्रि॰ प्रकाशिते ॥
रोची । त्रि॰ रोचिष्णौ ॥
रोचिष्णु : । त्रि॰ अलङ्कारादिनाशोभ
माने । विभ्राजि । भ्राजिष्णौ ॥
रोचतेतच्छील : । रुच॰ । अलङ्
कृतिति॰ इष्णुच् ॥
रोचि : । न॰ शोचिषि । त्विषि ।
प्रभायाम् । दीप्तौ ॥ रोचतेऽनेन
। रुच॰ । बाहुलकादिसि : ॥
रोची । स्त्री॰ हिलमोचिकायाम् ॥
रोच्य : । त्रि॰ प्रकाश्ये ॥ प्रीतिवि
षये ॥
रोटिका । स्त्री॰ रोटी॰ इतिभाषा
प्रसिद्धेपिष्टकविशेषे ॥ अस्या : प्र
कारप्रकारोयथा । शुष्कगोधूमचूर्णं
नकिञ्चित्पुष्टाक्षपोलिकाम् । तत
कीसेदयेतक्षण्या मुपार्घरेपितांपचे
त् । सैवारोटिकाप्रोक्तागुणाम
स्या : प्रचक्ष्महे । रोटिकाबलकृद्वु
च्या ह्रिष्यीधातुवर्द्धनी ॥ वातघ्नी
कफकृद्धी दीप्ताग्नीनां प्रपूजिता
। यवजारोटिकारुच्यामधुराविश
दालघुः । मलशुक्रानिलकरीब
ल्याह्रस्तिकफामयान् ॥ मीनसञ्ज्ञा
सकासांश्चमेदोमेहगलामयान् ॥
रोड : । पुं॰ चोदे ॥ त्रि॰ दत्ते ॥
रोदनम् । न॰ क्रन्दने । शोकादिना
स्रुपतने । रोना॰ इ॰ भा॰ ॥
अस्रे । अश्रुणि । आंसू॰ इ॰भा॰
रुद्यते । रुदिर्अश्रुविमोचने । बा
हुलकात्कर्मणिल्युट् । तल्लेश
माशुभंयथा । अनस्तिग्धरुदि
तमदीनं शुभदंनृणाम् । प्रचुरा
श्रुदीनंरूक्षकरुदितं नसुखावहम् ।

॥ रोदनाश्रुपतनेमृतानांनरकं यथा ॥ चानिनोमारुदन्त्वेममारो दौः पुत्रसाम्प्रतम् ॥ रोदनाश्रु प्रपतनान्मृतानांनरकंध्रुवम् ॥ स्व तमहिरोदननिषेधोयथा ॥ श्ले ष्माश्रुबान्धवैर्मुक्तंप्रेतोभुङ्क्तेयतो ऽवशः । अतोनरोदितव्यंहिक्रिया कार्याविधानतः इति ॥

रोदनिका । स्त्री॰ यवासे ॥

रोदनी । स्त्री॰ कच्छुरायाम् । दुरालभायाम् । यवासे ॥ रोदयति । रुदिर्॰ । ल्युट् । ङीप् ॥

रोदः । न॰ दिवि । भूमौ । द्यावापृथिव्योः । रोदितिसर्वमस्मिन् । रुदिर्॰ । असुन् ॥

रोदसी । अ॰ द्यावापृथिव्योः । दिवि ॥ भूमौ ॥

रोदसी । स्त्री॰ स्वर्गे । भूमौ ॥ द्यावाभूम्योः ॥ गौरादित्वात्ङीष् ।

रोदस्यौ । स्त्री॰ द्विवचनान्तः । भूमिस्वर्गयोः ॥

रोधः । पुं॰ नदीतीरे । कूले ॥ रुणद्धि । रुधिरावरणे । पचाद्यच् ॥ प्रतिबन्धे ॥

रोधकः । त्रि॰ रोधिनि । रुधिर्॰ । ण्वुल् ॥

रोधनः । त्रि॰ रोधकर्त्तरि । न॰ रोधे ॥

रोधवक्रा । स्त्री॰ सरिति ॥ रोधेन-वक्रा ॥

रोधः । न॰ तीरे ॥ रुणद्धि । रुधिर्॰ । सर्वधातुभ्योऽसुन्निति॰ असुन् ॥

रोधोवक्रा । स्त्री॰ नद्याम् ॥ रोधसा-वक्रा ॥

रोधोवती । स्त्री॰ नद्याम् ॥

रोध्रः । पुं॰ गालवे । लोध्रे । न॰ अपराधे ॥ किल्बिषे ॥ रुणद्धि । रुधिर्॰ । बाहुलकाद्रन् ॥

रोध्रपुष्पः । पुं॰ मधूकवृक्षे ॥

रोध्रपुष्पिणी । स्त्री॰ धातकीवृक्षे ॥

रोपः । पुं॰ रोपणे ॥ इषौ । बाणे ॥ न॰ छिद्रे ॥ रोप्यतेऽनेनवा । रूपविमोहने । ण्यन्तः । घञ् ॥ यद्वा । रूप्यतेऽनेन । करणेतिघञ् ॥

रोपकः । पुं॰ सुवर्णसप्ततितमभागे ॥ यथाहविष्णुगुप्तः । दीनारारोपकैरष्टाविंशत्यापरिकीर्त्तितः । सुवर्णसप्ततितमोभागोरोपकउच्यतइति ॥

रोपणम् । न॰ विमोहने ॥ जनने ॥ प्रादुर्भावे ॥ रुपेर्भावेल्युट् ॥ अञ्जनविशेषे ॥ यथा । रोपणंरसकं पिष्ट्वासम्यक्समं शाल्मलीरिया । स्नुहीयात्तज्जलंसर्वंत्यजेच्चूर्णमधोगतम् ॥ शुष्कंसतज्जलंसर्वंपर्पटीसन्निभंभवेत् । त्रिचूर्णंभावयेत्सम्यक्त्रिवेलंत्रिफलारसैः ॥ कर्पूरस्वरसंतच्चद्गमांशेननिःक्षिपेत् ।

भक्षयेन्नयनीतेननेत्राखिलगदच्छि-
द : ॥

रोपणचूर्णम् । न० नयनाञ्जनविशे-
षे ॥ यथा । शिलायांरसकंपिष्ट्वास
म्यगाज्यस्यवारिणा । शरावीयाश
न्यांसर्वंघृतेसूर्यमधोगतम् । शु
ष्कंतच्चलंसर्वंपर्पटीसन्निभंभवेत्
। विचूर्ण्यभावयेत्सम्यक्त्रिवर्त-
त्रिफलारसे : । कर्पूरस्यरजस्तत्र
दत्ताशीतेनतिः क्षिपेत् । भक्षयेत्तय
नंतेनसर्वदोषोपशान्तये ॥ समस्त
नेत्ररोगघ्नं चूर्णमेतन्नसंशय : ॥

रोपणवर्त्तिः । स्त्री० नेत्राञ्जनप्रभेदे ॥
यथा । जातीतिलपुष्पाणिपटिः
पिप्पलतण्डुला : । जातीपुष्पाणि
पञ्चाशन्मरिचानिषोडश ॥ सू-
क्ष्मं पिष्ट्वाम्बुनावर्त्ति : कृताकुसु-
मिकाभिधा । तिमिरार्जुनशुक्ला
नांनाशिनीमांसवृद्धिनुत् ॥ यतश्च
चक्षुर्नेत्रेऽञ्जनाभ्यासाद्धरेशुक्ला ।
कुसुमिकावटी० रोपणी ॥

रोप्यातिरोप्यः । पुं० धान्यविशेषे । य
था । रोप्यातिरोप्याल्पव : शीघ्रपा
कागुरोत्तरा : । पटाविनोदोषघ्न-
राबल्यामूत्रवियद्धना : ॥

रोमम् । न० जले ।

रोमकम् । न० पांशुलवणे । अयस्का
न्तप्रभेदे । पुं० रुमाभिधेनगरे ।

रोमकन्द : । पुं० पिण्डालौ ॥

रोमकपत्तनम् । न० पश्चिमेकेतुमाल-
वर्षस्थनिरक्षदेशेविद्यमानेपत्तने ॥
रूमे ॥ तच्चाधुनारूमश्याम० इति
नाम्नाप्रसिद्धम् ॥

रोमकूप : । पुं० रोममूले ।

रोमकेशरम् ।
रोमगुच्छम् ।
रोमगुच्छकम्
रोमगुल्मम् ।
} न० चामरे । चम
चूलके ॥

रोमः । न० लोम्नि । चर्मणि । तनूरु
हे ॥ सामुद्रिकंयथा । अल्परोमयुता
श्रेष्ठाजङ्घाहस्तिकरोपमा । रोमे
कैकंकूपकेस्यान्नृपाणांतुमहात्म-
नाम् । द्वे द्वे रोमेपण्डितानांश्रोत्रि
याणांतथैवच । रोमत्रयंदरिद्राणां
रोगीनिर्मांसलाञ्जुक : ॥ अपिच ।
रोमैकैकंकूपकेपार्थिवानां द्वे द्वे ध
र्मिष्ठश्रोत्रियाणाम् । त्र्याद्यै निः
स्वामानवादुःखभाजः केशाश्चैवं
निन्दिताः पूजितार्थे ति । रौरु
ति । रुइ० । नामन्सीमव्योम-
न्रोमलोमेत्यादिनासाधु । यद्वा ।
रूयते । रुशब्दे० कङ्गतौ० भा
वयेवा मनिन् ॥

रोमन्थः पुं० उद्गीर्णचर्वणे । पशूनांच
र्वितस्याहृत्यपुनश्चर्वणे । शृगार०
दु० भा० ॥

रोमभूमि : स्त्री० चर्मणि ।

रोमलता । स्त्री० रोमावल्याम् ॥

रोमवान् । त्रि० रोमशे । लोमविशिष्टे ॥

रोमविकार : । ) पुं० रोमाञ्चे ।
रोमविक्रिया । ) स्त्री० रोमहर्षणे ।

रोमशः । पुं० पिण्डालौ । मेषे ॥ कुम्भिनि ॥ शूकरे । त्रि० अतिशय लोमविशिष्टे । रोमाणिसन्त्यस्य । लोमादित्वात् श : । रलयोरभेद : ॥

रोमशफल : । पुं० डिण्डिशे । मुनिनिर्मिते । डिण्डसी० टिण्डा० इ० भा०

रोमशा । स्त्री० इस्थावृचे ॥

रोमशकम् । न० स्रोर्णवकी ॥

रोमहर्ष : । पुं० पुलकितत्वे । रोमाञ्चे ॥

रोमहर्षण : । पुं० सूते । इतिहासपुराणानांधारकेव्यासशिष्ये ॥ यथा तैस्सर्वैरोमाञ्चितसमुत्थितानिषत् । द्वैपायनस्यभगवतस्तैर्वैरोमहर्षणाः ॥ भवन्तमिवभगवान्व्याजहारस्वयंप्रभुः ॥ विभीतकवृक्षे । न० रोमाञ्चे । रोम्णांहर्षणम् ॥

रोमाञ्च : । पुं० रोमहर्षणे । रोमोद्गमे ॥ रोम्णामञ्चनंपूजनम् । आवेशनम् ॥

रोमाञ्चिका । स्त्री० कटम्बीवृक्षे ॥

रोमाञ्चित : । त्रि० जातपुलके । हृष्टरोमणि ॥ रोमाञ्चः सञ्जातोस्य । तारकादित्वादितच् ॥

रोमाली । स्त्री० वय : सन्धौ ॥ रोमावल्याम् ॥

रोमालु : । पुं० पिण्डालौ ॥

रोमालुविटपी । पुं० कुम्भीवृक्षे ॥

रोमावली । स्त्री० नाभेरुपरिलोमश्रेण्याम् ॥

रोमाश्रयफला । स्त्री० भिन्दिरिटाक्षुपे ॥

रोमोद्गम : । ) पुं० रोमहर्षणे ।
रोमोद्भेद : । ) पुं० रोमाञ्चे ।

रोलः । पुं० पार्श्वीयामलकी ॥

रोलम्ब : । पुं० भ्रमरे ॥

रोला । स्त्री० मात्रावृत्तान्तरे । यथा । रोलावृत्तमवेहिनागपतिपिङ्गल-भणितंप्रतिपदमिहचतुरधिकमाला यि प्रतिपदिगणितम् । एकादश अधिविरतिरखिलकलचितावरय सुगलितपदमइकारिभिमलकलितक स्वाभरणम् ॥ यथा । तरतिपयोनिधिसलिलमयतिगिरिशिखरशिखरि० विश्वविरसातलमटतिपश्चवसकलदिशोपरि । गगनगमनमभिलषतिसमंशशिना । श्रियमञ्चतिचित्रमिदनतथापिभवन्तं भूपविसुखति ॥

रोट । त्रि० वधके । हिंस्रे । रोपति । रुप० । क्विप् ॥

रोषः । पुं० कोपे । क्रोधे ॥ अपमे

यमुदेतुमिच्छति तिमिरं रोषमयं धियापुरः। अविभिद्य निशाकृतं तमः प्रभयानांशुमताप्युदीयते॥ रोषणम्। रुष हिंसायाम्। भावे घञ्॥

रोषणः। पुं॰ पारदे। हेमकषे॥ उपले। ऊषरे। त्रि॰ क्रोधने। अमर्षणे॥ रोषणिताच्छीलः। रुष॰। क्रुधमण्डार्थेभ्यश्चेति युच्॥

रोषमयः। त्रि॰ रोषादागते। मयट् तिमयट्॥

रोषितः। त्रि॰ रोषं प्रापिते। कष्टे॥

रोहः। पुं॰ अङ्कुरे॥ सादिनि॥

रोहकः। पुं॰ भूतविशेषे॥ त्रि॰ रोढरि। रोहकारे॥ रुह बीजजन्मनि प्रादुर्भावे। ण्वुल्॥

रोहणः। पुं॰ गिरिप्रभेदे। विदूराद्रौ॥ न॰ शुभे॥ जन्मनि॥ प्रादुर्भावे॥

रोहन्तः। पुं॰ द्रुमविशेषे। रुह्यात्। रुह॰। रुहिनन्दिजीविप्राणिभ्यः षिदाशिषीति झच्॥ इच्छमार्थे॥

रोहन्ती। स्त्री॰ लतान्तरे॥ षित्वात् ङीष्॥

रोहिः। पुं॰ बीजे। हर्षे॥ धार्मिके। व्रतस्थाम्॥ रोहति। रुह॰। कृपिपिशदिहस्तिसिदिहिक्षिदिकीर्त्तिभ्यश्चेतीन्॥ गन्धमृगे॥

रोहिणः। पुं॰ भूतृणे॥ वटवृक्षे॥ रोहितकवृक्षे॥ न॰ कालभेदे। रौहिणे। दिनस्य नवमे मुहूर्त्ते॥ सप्तपूर्वाह्णश्राद्धस्य गौणकालत्वेनोत्तरावधिः। अपराह्णश्राद्धस्य पूर्वावधिः। एकोद्दिष्टश्राद्धस्य समानकालः। रोहति। रुह॰। रुहेर्वृद्धिश्चेति॰ इनन्॥ त्रि॰ रोहिण्यां जाते। नक्षत्रेभ्यो बहुलमिति लुक्। लुक् तद्धितलुकि॥

रोहिणिः। स्त्री॰ रोहिणीनक्षत्रे॥

रोहिणिका। स्त्री॰ रागादिना रक्तावयवायां स्त्रियाम्॥

रोहिणी। स्त्री॰ अश्विन्यादिषु चतुर्थे नक्षत्रे। आकाशाम्॥ तज्जातस्य फलं यथा, स्याद्धर्मकार्ये कुशलः कुलीनः सुचारुदेहोविधसत्पवीरः। स्वराग्निनाप्याकुलिताखिलाशयो यो रोहिणीजः सधनीसमानी॥ इति॥ रोहिणीनक्षत्रे प्रति गौरादिषु पाठात् ङीष्॥ कण्ठरोगविशेषे॥ अस्य नामानि सङ्ख्या च यथा, रोहिण्यः पञ्चधा प्रोक्ता कण्ठशालूकमेव च। अधिजिह्व वलयोऽलासनामैकावृन्दकः॥ शतीवृन्दः शतघ्नी च गिलायुः कण्ठविद्रधिः। गलौघः स्वरघ्नश्च मांसतालव्यमेव च॥ विदारी कण्ठ

लक्तकर्म्मा।

ल:। पुं॰ इन्द्रे। शक्रे। लकारे॥ लवुचरे॰।॰॥ न॰ पृथ्वीबीजे॥ लीयते। लीङ्॰। अन्येभ्योऽपिदृश्यत इति ड:॥

लकच:। पुं॰ डहौ। लकुचे। इतिशब्दरत्नावली॥

लकुच:। पुं॰ लिकुचे। डहौ। हढवल्कले। स्थूलस्कन्धे। चुद्रपनसे। बडहर॰इ॰भा॰प्र॰॥ अस्यगुणा:। आमंलकुचमुष्णञ्चगुरुविष्टम्भकृत्तथा। मधुराम्लरसञ्चापिदोषत्रितयरक्तकृत्॥ शुक्राग्निनाशनञ्चापिनेत्रयोरहितंमतम्। सुपक्वंतत्तुमधुराम्लंचानिलपित्तकृत्॥ कफाग्निकरंरुच्यंवृष्यंविष्टम्भकृत्तत्॥ लकयते। लकआस्वादने। बाहुलकादुच:॥

लक्तक:। पुं॰ जीर्णवस्त्रखण्डे। कर्पटे। जटा॰इ॰भ॰प्र॰॥ द्रवद्रव्यं येनपूयते तत् छटीयमितिख्याती॰ तत्तुजीर्णवस्त्रे भिक्षते। मलिनस्यादिदृष्टजीर्णवस्त्रखण्डे॰इतिमुकुट:॥ प्रक्षेदादिमार्जनार्थंवस्त्रस्य वस्त्रखण्डस्यसंज्ञेयमितिनव्याख्यातु:॥ लक्यते। आस्वाद्यते। बाहुलकात्तन्। स्वार्थेकन्। यद्वा। लक्यते स्म। लक॰। क्त:। स्वार्थेकन्॥

लक्तकर्म्मा। पुं॰ पट्टिकाख्ये। रक्तश र्यलोध्रे॥

लक्षम्। न॰ व्याजे। अपदेशे। मद्भोइफलक्षातिरिक्तव्याजे। शरव्ये॥ न॰ स्त्री॰ दशायुतसङ्ख्यायाम्- १००००० लाख इ॰भा॰॥ लक्षम्। लक्षआलोचने। घञ्॥ लक्ष्यतेऽत्र॥

लक्षक:। त्रि॰ लक्षयितरि। लक्षयतियस्तस्मिन्॥ यथा। लक्षकंनाम लक्षयति। यादृशार्थस्यसम्बन्ध्यति शक्तस्तुयद्भवेत्। लक्षकत्वकंनामत ल्लक्षणाविधुरंयदि। यादृशार्थसम्बन्धवतियन्नामसङ्केतितंतदेवतादृशार्थेलक्षकम्॰यदितादृशार्थेशक्तिशून्यं भवेत्। सैन्धवादयस्तुशब्दास्तुरगादिसम्बन्धिनि॰लवणादाविवतुरगाद्यर्थेलक्षकाएव। गङ्गादयस्तुतीरादावसङ्केतिता:। तत्सम्बन्धिनीरादिगतत्वेनशक्तेभ्यस्तीराद्यन्वयबोधकत्वेनलक्षकाएव॥

लक्षणम्। न॰ नाम्नि। चिह्ने। स्वरूपे। फले॥ लक्ष्यतेज्ञायतेऽनेनेति। लक्षदर्शनाङ्कनयो:। करणेल्युट्॥ तद्द्विविधम्। इतरभेदानुमापकम्॰व्यवहारप्रयोजकञ्चेतिन्यायमतम्॥ व्याकरणमतन्तु। कृत्तद्धितसमासानामभिधाननियामकम्। लक्षणन्त्वनभिज्ञानां राढभिज्ञानसूचकमिति॥ सजाती

व्यापारवत्त्वमसम्भावितम् । तत्
कार्य्यस्य कम्बलपटात्मनएवतदुपपत्तेः
। ततस्तकम्बलेपटादौ चतयोः कार
णभूतयोरूर्णाकार्पासयोरुपचारः
कृतः ॥ समीपार्थलक्षणायथा ।
गंगायांघोषइति । अत्रहिमुख्यया
वृत्त्याप्रवहज्जलरूपस्रोतः गुणवृ
त्त्यातत्समीपंयद्दिक्षितिस्थितंगांग
त्वः आधेयेन तद्गाम्यासम्भाव्येवया
माधिकरणतेति सामर्थ्यात्तत्सा
मीप्यलक्षणात्वेमतद्गमतिष्ठति ॥
उपकारकेभिप्रलक्षणादृश्यते यथा ।
भिक्षाभासयन्तिकारीषोऽध्यापयती
ति । अत्रहिकिलभिक्षास्तस्माव
रणांचसंकरेणगृहीत्वागमननिषेधं-
कुर्वन्ति । नाधिसर्वथाऽस्मात्त्वा
मान्नगन्तव्यमितिप्रत्ययवचनैरध्या-
पयन्ति । अपितुप्रवृत्तानव्यञ्जनव
स्तस्तित्सुत्वाभ्निरसनक्रियामुपका
रकत्वेनसम्भाव्यमानाः प्रयोजका-
त्वेनोपचर्यन्ते । एवंचनकारीषाक
पुष्पाधीर्व्वतित्रुबन्माणवकमध्याप
यति । नापितच्छरीरमनुप्रविश्यभू
तवेतालादिभिरियेनपाठयति ।
किन्तुहिंशीतापनुत्तिहेतुतयाध्यय-
नविध्युपकारकत्वेनानुकृत्यंमतं
स्तत्प्रयोजकत्वेनोपचरित । किं
चधर्माद्यनुक्तावितिचादियइ
पादाकारानुक्तौयथा । ताधर्मानु

क्तौयथा । सिंहोमाणवकः । गौ
र्वाहीकइति । अत्रकिललक्षणया
सिंहधर्माणांशौर्यादीनामनुक्त्यर्थं
माणवकेसामानाधिकरण्येनसिंह
शब्दः प्रयुक्तः । मुख्ययावृत्त्यातस्य-
सिंहत्वस्यासम्भवात् । वाहीकेऽपि
पृष्ठवहनस्यासम्भवात्तिष्ठलक्षणग
च्छत्पृष्ठपादिबलीवर्द्दगतधर्मानुक
रणार्थंगोशब्दः सामानाधिकरण्ये-
नोपचरितइत्तिरेवप्रवृत्त. । मुख्यया-
वृत्त्यातयाऽनन्वयात् । एवमाकारा
नुक्तौयथा । सूचिभेद्यंतमोभिरि
ति । अत्रहितमसोऽमूर्त्तत्वात्सूचि
भेद्यत्वंमुख्ययावृत्त्यानसम्भवतीति
लक्षणयातिनिबिडत्वंवक्तुमाक्षति. सू
चिभेद्यत्वेनानुकृता । एवंनामध
नादिस्वामित्वादिवत्सुख्यादि-
नाभेदमप्येपांवक्तुंशक्यमित्यर्थः ।
मानामेयपरोचेमुख्यार्थस्यापरिग्रहे
जाते । मुख्याविनाकृतेयेयावृत्तिः
सैवलक्षणाप्रोक्तासिद्ध्यपाद्यापा-
र्य्याः ईसवोभायाम् । प्रमाणे ।
लक्ष्येऽनयेतिलक्षणा । टाप् ।
सारस्वांलक्षणाकश्चिदितिमेदिनि
करः ॥

लक्षणार्थः, पुं, लक्षणस्यप्रयोजने ।
समानासमानजातीयव्यवच्छेदे ॥
इदृपस्यत्र्यर्थः ॥

लक्षणीय । त्रि, लक्ष्ये ॥ भाव

नीये ॥

लक्षलूम् । न० लक्षणात् स्थानाम्यत्वे ॥

लक्षा । स्त्री० दशायुतसङ्ख्यायाम् ॥

लक्षितः । त्रि० ज्ञापिते ॥ आलोचिते ॥ दृष्टे ॥ अङ्किते ॥ लक्षेः कर्म्मणि क्तः ॥ लक्षणाश्रये ॥

लक्षितलक्षणा । स्त्री० लक्षितलक्षणायाम् ॥

लक्षिता । स्त्री० परकीयान्तर्गतनायिकाभेदे ॥

लक्ष्मणः । पुं० सौमित्रौ । श्रीरामभ्रातरि ॥ सारसे ॥ पक्षे । न० चिह्ने ॥ नामनि ॥ लक्षयति । लक्ष० । चुरा दिष्वनात् ग्रहे टन्, पि णिनप्रत्ययस्य मुडागमोपीत्यर्थे क्तिः ॥ त्रि० श्रीयुक्ते सश्रीके ॥ लक्ष्मीरस्त्यस्य । पामादित्वान्नः । लक्ष्म्याअर्श इतिगणसूत्रेण स्वविधित्वं ॥

लक्ष्मणप्रसूः । स्त्री० सुमित्रायाम् ॥

लक्ष्मणा । स्त्री० सारसस्त्रियाम् ॥ श्वेतकण्टकार्याम् । दुर्गासप्तांकिन्याम् । कटुबोन्ताक्याम् । त्रि । सैंहपर्ण्याम् । चन्द्रपुष्पायाम् ॥ औषधीभेदे । पुत्रकन्दायाम् । पुत्रदायाम् । नागपत्राम् । रक्तविन्दुच्छदायाम् । लक्ष्मणाकन्ददृतिनाम्ना गौडदेशेप्रसिद्धे ॥ तथाच यथा । पुत्रस्याकाररक्ताल्पविन्दुभिर्लाञ्छितासदा । लक्ष्मणापुत्रजननी वस्तगन्धाकृतिर्भवेत् ॥ कथितापुत्रदावश्यं लक्ष्मणामुनिपुङ्गवैः ॥ अदन्तत्वाट्टाप् ॥ दुर्योधनकन्यायाम् । साम्बपत्न्यां ॥

लक्ष्म । न० चिह्ने ॥ प्रधाने ॥ लक्षयति० लक्ष्यतेवा । लक्ष० । मनिन् ॥

लक्ष्मीः । स्त्री० विष्णुपत्न्याम् । पद्मालयायाम् ॥ पद्मायाम् । लोकमातरि । मायाम् ॥ सम्पत्तौ ॥ शोभायाम् ॥ ऋद्ध्योषधौ ॥ वृद्धिनामौषधौ ॥ फलनीवृक्षे ॥ सीतायाम् ॥ वीरभार्य्यायाम् ॥ श्वेतपद्मिन्याम् ॥ हरिद्रायाम् ॥ धन्यास् द्रव्ये । मुक्तायाम् ॥ मोक्षप्राप्तौ ॥ लक्षयति० पश्यति नीतिज्ञम् । लक्ष० । लक्षेर्मुट् चेति० ईप्रत्ययस्यमुट् ॥ लक्ष्यते० लक्ष्यतेवा दुर्गायाम् ॥

लक्ष्मी । स्त्री० लक्ष्म्यर्थे ॥ कृदिकारादिति ङीष् ॥ लक्ष्मीर्लक्ष्मीश्चरित्रिया मितिद्विरूपाभिधानम् ॥

लक्ष्मीकान्तः । पुं० नारायणे ॥

लक्ष्मीगृहम् । न० रक्तोत्पले । लक्ष्म्यागृहमिवगृहम् ॥ लक्ष्म्यावेश्मनि ॥

लक्ष्मीजनार्द्दनः । पुं० शालग्रामविशेषे ॥ तल्लक्षणंयथा । एकद्वारेचतुश्चक्रं नवीननीरदोपमम् । लक्ष्मी

जनार्द्दनं चक्ररहितं वनमालया ॥ इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

लक्ष्मीताल : । पुं॰ श्रीतालवृक्षे ॥ तीर्थचिन्ताख्यपरिच्छेदविशेषे ॥

लक्ष्मीनारायण : । पुं॰ शालिग्रामविशेषे ॥ तल्लक्षणं यथा । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥

लक्ष्मीनृसिंह : । पुं॰ शालिग्रामविशेषे ॥ तल्लक्षणन्तु । द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् । लक्ष्मीनृसिंहं विज्ञेयं गृहिणाञ्च सुखप्रदम् ॥

लक्ष्मीपति : । पुं॰ वासुदेवे । नारायणे ॥ लक्ष्म्याः पतिः । नरपतौ ॥ पूगे ॥ लवङ्गवृक्षे ॥ सम्पत्तियुक्ते ॥

लक्ष्मीपुत्र : । पुं॰ कामदेवे तुरङ्गमे ॥ लवे ॥ कुशे ॥

लक्ष्मीपुष्प : । पुं॰ पद्मरागमणौ ॥

लक्ष्मीफल : । पुं॰ विल्ववृक्षे ॥ लक्ष्मीप्रदं प्रियं वा फलमस्य । शाकपार्थिवादिः ॥

लक्ष्मीवान् । पुं॰ पनसवृक्षे ॥ श्वेतरोहितवृक्षे ॥ त्रि॰ श्रीले । श्रीमति । श्रीसमन्विते ॥ लक्ष्मीरस्यास्ति । मतुप् । मादुपधायाश्चेति वत्वं ॥

लक्ष्मीवेष्ट : । पुं॰ श्रीवेष्टे ॥

लक्ष्मीश : । पुं॰ श्रीशे । विष्णौ ॥

लक्ष्मीसमाह्वया । स्त्री॰ रामपत्न्याम् । सीतायाम् ॥ लक्ष्मीसमाह्वयो यस्याः ॥

लक्ष्मीसहज : । पुं॰ चन्द्रे ॥

लक्ष्म्याराम : । पुं॰ वनविशेषे ॥ लक्ष्म्याः आरामः ॥

लक्ष्यम् न॰ शरवेध्ये । शरव्ये ॥ व्याजे । अपदेशे ॥ त्रि॰ अनुमेये ॥ लक्षणयाबोध्ये । दर्शनीये ॥ लक्षयम्॰ लक्ष्यतेवा । लक्षआलोचने । ण्यत् ॥

लक्षीकृत : । त्रि॰ वेधुमिष्टे ॥

लगडम् । त्रि॰ चारुणि । बन्धुरे । मनोज्ञे ॥

लगित : । त्रि॰ सम्प्रयुक्ते । लगाद्॰ भा॰ ॥ लगीसङ्गे । क्तः ॥

लगुड : । पुं॰ दण्डे । दण्डकाष्ठे । लाठी॰ इ॰ भा॰ ॥

लग्न : । पुं॰ स्तुतिपाठके । मागधे ॥ न॰ मेषादिराशीनामुदये । चिप्रकाशात्मके ॥ त्रि॰ लज्जितसक्ते । लगतिफले । लगी॰ । क्षुब्धस्वान्तेति क्तस्याभावोनिष्ठानत्वमपि निपात्यते ॥

लग्नक : । पुं॰ प्रतिभुवि योऽहितायं विनाऽन्यकृतऋणस्य परिशोधं कर्त्तुमात्मानं स्वीकरोति॰ यथा । यदा

यस्तृणापनयनं नकरिष्यति० तत्र दुःखं करिष्यामीतितस्मिन्। वामन० इ० भा० ॥ लङ्घतेऽसौ । चोलची ब्रीडमे । मत्वर्थे तिक्तः । स्वार्थे कः ॥

लघट्। पुं० पवने। वायौ ॥ लङ्घते। लघिगतौ। लङ्घेर्नलोपश्चेत्य टिः ॥

लघटिः। पुं० वायौ ॥

लघिमा। पुं० शिवैश्वर्यप्रभेदे ॥ येनलघुर्भवति० यतः सूर्यरश्मीन्नाश्रित्यादित्यलोकं याति। लघुतायाम् ॥ लघोर्भावः। इमनिच् ॥

लघिष्ठः। त्रि० अत्यल्पके। अयमेषामतिशयेनलघुः। अतिशायने० इष्ठन्। संज्ञि ॥

लघीयान्। त्रि० अतिशयेनलघौ। लघुतरे ॥ यथालघीयान्शब्दोपदेशोगरीयानपशब्दोपदेश इति ॥ अयमनयोरतिशयेनलघुः। ईयसुन् ॥

लघुः। पुं० एकमात्रे वर्णे। यथा। गुरोर्विभिन्नोलघुरेकमात्रोह्रादिपूर्वोपिलघुर्विकल्पात्। क्वचित् सबिन्दुः क्वापिहलन्तरोकारयुक्तोपिलघुः क्वचित्स्यात्। उच्चार्यमाणास्त्वरितप्रयत्नात्द्विमात्रवर्णाः क्वचिदेकमात्रम्। भजन्ति

भाषाखथसंस्कन्धेषु विनाशमित्य वद्धधानयोक्यम् ॥ स्त्री० पृक्कानामौषधौ ॥ न० भीमे ॥ कृष्णागुरुणि ॥ लामज्जके ॥ सत्वगुणे ॥ विशेषनमशास्त्री। यथा। मृण्मा शिलन्यभिजिदस्ताख्यं लघुमं गुरुस्तथा। अचपप्यरतिप्राम भूषाभिल्प कलादिकम् ॥ त्रि० अगुरौ। मनोज्ञे। निःसारे। तुच्छे। लङ्घते। लघि० लंघिबंहीनलोपश्चेति कुनलोपश्च। लङ्घतेवा ॥

लघुग्रामः। त्रि० अल्पपाचके ॥

लघुकायः। पुं० अल्पायुषि। छागे। वर्करे। त्रि० क्षुद्रशरीरे ॥

लघुकाश्मर्यः। पुं० कट्फलवृक्षे ॥

लघुक्रियः। त्रि० क्षिप्रव्यापारे ॥

लघुखट्टिका। स्त्री० आसन्द्याम्। क्षुद्रखट्वायाम् ॥

लघुगर्गः। पुं० भिक्षुकण्टकमत्स्ये ॥

लघुचर्भिटा। स्त्री० मृगेर्वारौ ॥

लघुजङ्गलः। पुं० लावकपक्षिणि ॥

लघुतमः। त्रि० लघिष्ठे ॥ अतिशयेनतमप् ॥

लघुदन्ती। स्त्री० क्षुद्रदन्तीवृक्षे ॥

लघुदुन्दुभिः। पुं० ढक्कवाद्ये ॥

लघुद्राक्षा। स्त्री० काकलीद्राक्षायाम्। निर्बीजायाम् ॥

लघुनाम। न० अगुरुणि ॥

लघुपञ्चमूलम्। न० क्षुद्रपञ्चमूल

कुलटायाम् । धान्यविशेषे । करालचिपुटायाम् ॥ लक्यतेसुख मस्याम् । लकआस्वादने । चुरादिः । एरच् । घञ्वा । पृषोदरादित्वान्नुम् । कुम्भनुपधत्वान्नस्ति : ॥ यद्वा । रमन्ते स्याम् । वा हुलकात्कोलत्वञ्च ॥

लङ्कादाही । पुं॰ हनूमति ॥

लङ्काधिपतिः । लङ्कापतिः । पुं॰ रावणे ॥

लङ्कापिका । स्त्री॰ पृक्कायाम् । पिण्डिशाक॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लङ्कामलय : । पुं॰ लङ्काद्वीपस्थमलयशैले ॥

लङ्कायिका । स्त्री॰ ) लङ्कारिका । स्त्री॰ लङ्कायिकायाम् ॥

लङ्कास्थायी । पुं॰ वृक्षविशेषे । लङ्कास्थायाम् । लङ्कासित॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लङ्केशः । पुं॰ रावणे ॥

लङ्कोपिका । स्त्री॰ पृक्कौषधौ ॥ लङ्कायामुप्यते । टुवप्बीजसन्ताने । क्वुन् । वचिस्वपीतिवस्थत: ॥

लङ्कोयिका । स्त्री॰ पृक्कायाम् ॥ लङ्कायामूयते । ऊयीतन्तुसन्ताने । क्वुन् ॥

लङ्गः । पुं॰ सङ्गे । विङ्गे । लाङ् इ॰ गौ॰ भा॰ प्र॰ विटे ॥

लङ्गूलम् । न॰ लाङ्गूले । पुच्छे ॥

लङ्घनम् । न॰ उपवासे ॥ कर्षणे ॥ चतुष्प्रकारासंशुद्धि : पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेतिलङ्घनमितिचरकोक्तौ यथानिर्णीतत्वात् ॥ अनशने ॥ लङ्घनमेकमुक्तौ नैतेषीषे सम्भविते नवे । विज्वरत्वंलघुत्वञ्च क्षुधा चोपजायते ॥ इत्यनशनरूपस्य लङ्घनस्यफलकथनात् ॥ चिरार्थपञ्चरात्रंवाद्दशरात्रमथापिवा । लङ्घनं सन्निपातेषु कुर्यादारोग्यदर्शनादितिचक्रपाणिदत्त : ॥ आक्रमणे । प्लवने । अश्वकृतीयगतौ ॥ भुतन्तुलङ्घनं पक्षिन्मगत्यनुहारकमितिहेमचन्द्रोक्त : ॥ आक्रमणे । यथा । नचाग्निं लङ्घयेद्धीमान् नोपदध्यादध : क्वचित् । नचैनं पादत: कुर्यान्मुखेनैनधमेद्बुध : ॥

लज्जकारिका । स्त्री॰ लज्जालौ । वराहक्रान्तायाम् । समङ्गायाम् । सिक्तागन्धायाम् । नमस्कार्याम् ॥

लज्जा । स्त्री॰ मन्दाक्षे । त्रपायाम् । सुशीलस्यभार्ययम् । पद्मशान्तिम् ॥ क्लीबेऽकरणीयेपरज्ञानसम्भवाद् : खे ॥ अकरणीयाप्रवृत्तिजनकोऽन्त : करणस्यवृत्तिविशेषे ॥ लज्जनम् । ओलस्जीव्रीडने ।

गुरोश्चहलदूल्य : । भर्लानश्रुभ-
शि । टाप् । लज्जाली ॥
लज्जालु : । पुं० स्त्री० वराहक्रान्तायाम् । नमस्कार्याम् । खदिरपत्रिकायाम् । सङ्कोचिन्याम् ॥ लज्जालु : शीतलातिक्ताकषायाकफपित्तनुत् । रक्तपित्तमतीसारंयोनिरोगान्विनाशयेत् ॥
लज्जाशील : । त्रि० अपत्रपिष्णौ । लज्जिते ॥
लज्जित : । त्रि० लज्जायुक्ते । सलज्जे । वीडिते । हीते ॥ लज्जासञ्जातास्य । तारकादित्वादितच् ॥
लज्जिरी । स्त्री० लज्जालौ ॥
लज्या । स्त्री० लज्जायाम् ॥ इतिश-ब्दरत्नावली ॥
लञ्ज : । पुं० पदे । कच्छे ॥ पुच्छे ॥
लञ्जिका । स्त्री० वेश्यायाम् ॥
लट : । पुं० प्रमादवचने । दोषे । लटति । लटबाल्ये । पच् ॥
लटक : पुं० दुर्जने । संज्ञायांकन् ॥
लटपर्णम् । न० त्वचे ॥
लट : । पुं० दुर्जने ॥
लट्व : । जातिविशेषे । नट०इ०भा० ॥ रागभेदे ॥ तुरङ्गमे ॥ इल्वणादित्वाद्-कोश : ॥
लट्वा । स्त्री० करञ्जप्रभेदे । फले । चटकायाम् । पक्षिविशेषे ॥ कुसुम्भे ॥ लटति । लट० । अशुप्रुषिलटीति
क्वन् । टाप् ॥
लडह : । त्रि० मनोज्ञे ॥ इतिविकाण्डशेष : ॥
लडु : । त्रि० दुर्जने ॥ इतिशब्दरत्नावली ॥
लड्डुक : । पुं० मोदके । लड्डू० लाड्डू० इ०भा ॥ लड्डुकोदुर्जरोगुरुरिति-राजवल्लभ : ॥ दधिमाषमथितमाषवल्लभ-मालिकामाषपर्पटा : । गुरुवाद्र्वकापूपाः गन्धकपालिकासिघमध्यमा:॥ नालिकेरप्रियालमज्जाकूष्माण्ड-कादय : । पवीतलड्डुका : प्रोक्ता : समावस्त्वन्यतोपिच ॥
लण्ड : । पुं० लवङ्गधूलिख्यातिवृक्षे । अपुरे ॥
लण्डज : । पुं० खेलञ्जे । इङ्गेरि ॥
लता । स्त्री० प्रियङ्गौ ॥ शाखायाम् ॥ पृक्कायाम् । ज्योतिष्मत्याम् ॥ लताकस्तूरिकायाम् । माधव्याम् । दूर्वायाम् ॥ माञ्जिष्ठायाम् ॥ अश्वमदर्याम् । कौवर्तिकायाम् ॥ सारिवायाम् । वल्ल्याम् ॥ प्रतती ॥ लतति । लतिः सौत्रोवेष्टनार्थ : । लतयावा तेवा । पचाद्यच्टाप् ॥
लताकस्तूरिका । स्त्री० लताकस्तूर्याम् । दक्षिणदेशजातायाम् । मुष्कदाना० इतिख्यातायाम् । लताकस्तूरिकातिक्ताखादीश्च्या हिमालघु : ।

गाढ्यञ्चसम्मत: । अस्य गुणादयो । लवण: शोधनो रुच्य: पाचन: कफपित्तद: । पुंस्त्ववातहर: कायशैथिल्यमृदुताकर: ॥ सोऽतियुक्तोऽचिपाकास्रपित्तकोपक्षयापहत् ॥ अपिच । लवणोऽरुचिजाड्य सौगन्ध्योपचन: स्वादुकरश्च । रसिकोऽतितरां ज्वरवातपित्तशितिमानश्च ददाति कुष्ठकारी ॥ पुनश्च । लवण: क्लेदनस्तीक्ष्ण: पाचनोद्दीपन: सर: स्निग्धोऽभिष्कार: स्यन्दोहृच्छिश्नरूक्षरोऽलघुरिति ॥ पुनश्च । अस्थिभिदं ॥ न० सैन्धवादौ । तथाहि । सामुद्रं यत्तु लवणमक्षीवं मणिरस्वमतत् । सैन्धवोक्षीयोऽभिषं मणिमन्यत्तु सिन्धुजं ॥ रौमकं वसुकं पाक्यं विडम्बकादिद्वयम् । सौवर्चलोऽक्षरुचकी० तिलकं लवमे चकी पूल्यमर: । लवण नैपथ्योर्व्विप्रायश: सैन्धवं विमेतिविशेष: पूर्वाह्णक्ष्यादिचाक्षानांप्रायशो लवणं हितम् । शूलानाहविबन्धघ्नं लवणं सैन्धवं परमितिसिद्धयोगोश्वर

सलवण: । त्रि० लवणरसयुक्त । सलवणं । सलूणा० इ० भा० । लुनातिजाड्यम् । लूञ्० । नन्द्यादित्वाल्ल्यु: । लवणाद्युमिति लिंगानुशासनम् । लवणो नस्यदृष्ट: । लवण: सूप:० लवणायवागू:० लवणं शाकम् । संसृष्टे येनातश्च ठञोलवणाल्लुगितिलुक् ॥ लवणोसत्यस्मिन्नुवा । अर्शआद्यच् ॥

लवणकिंशुका । स्त्री० महाज्योतिष्मत्याम् ॥

लवणक्षार: । पुं० क्षारविशेषे । लोणारे ॥

लवणखानि: । स्त्री० रुमायाम् । सांभरलवणोत्पत्तिस्थाने ॥ लवणाकरमात्रे ।

लवणतृणम् । न० लोणहर्णे । तृणान्ते । पटुतृणकी । अल्लकाण्डे ॥

लवणत्रयम् । न० विड्बकसैन्धवे च ॥

लवणधेनु: । स्त्री० दानार्थं लवणादिनिर्मितधेनौ ॥

लवणपञ्चकम् । न० सैन्धवादिषु ॥ सैन्धवं चपकसौवर्चिडं सामुद्रकं गडम् ।

लवणमद: । पुं० लोणारे । लवणक्षारे ॥

लवणा । स्त्री० नदीविशेषे । त्विषि महाज्योतिष्मत्याम् ॥ लीमाख्यप्र० चे० इतिकश्चित् ।

लवणाकार: । पुं० लवणोत्पत्तिस्थले ॥ रुमायाम् ॥

लवणाकरणम् । न० लोणारे ॥

लवणाचल: । पुं० दानार्थं लवणादिकृतपर्वते ॥

लवणाब्धि : । पुं॰ लवणोदे । क्षारा ब्धौ ॥

लवणाब्धिजम् । न॰ सामुद्रलवणे ॥

लवणाम्भा: । पुं॰ लवणाब्धौ ॥ लवणं क्षारमम्भोयस्य ॥

लवणारक्तम् । न॰ लोणारक्षारे ॥

लवणाष्टकम् । न॰ सैन्धवादिषु ॥ तद्यथा । लवणाष्टकमेतच्च सैन्धवस्तु वर्चलम् । विड सामुद्रसञ्जातमुद्भिदं रोमकं गडम् ॥

लवणोत्तमम् । न॰ सैंधवे ॥

लवणोत्थम् । न॰ लोणारक्षारे ॥

लवणोद : । पुं॰ लवणार्णवे ॥ लवणमुदकं यस्य । उत्तरपदस्यार्थे त्युदकस्योदादेश : ॥

लवनम् । न॰ छेदने । अभिलावे । लूयन्ताद्दुति भावाप्रत्यये ॥ लूञ्॰ ल्युट् ॥

लवली । स्त्री॰ फलवृक्षविशेषे । यो ष्मकायाम् । धर्मिमायाम् । लोना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लवपति : । पुं॰ नवांशेशे ॥

लवली । स्त्री॰ सुगन्धमूलायाम् । कोमलवल्कलादाम् । नोयाडि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ फलवृक्षे । अस्य फलगुणायथा । लवलीफल मम्लार्द्र: कफपित्तहरं गुरु । विश द रोपन रुच्य स्वादुस्तं तुवर रसे ॥

लवाक : । पुं॰ छेदनद्रव्ये ॥

लवाणक : । पुं॰ दात्रादौ ॥

लूयतेऽनेन । लूञ्॰ । आणकोऽनु बन्धिक्षिपाद्यन्यदुत्त्यापक : ॥

लवि : । त्रि॰ छिदुरे ॥

लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन । अर्तिलूधूसूखनिसहचर इत्र : ॥

लशुन : । पुं॰ न॰ रसोने ॥ अस्य पर्यायाद्योयथा । रसोनोलशुनोरि ष्टोम्लेच्छकन्दो महौषधम् । महाक न्दोरसोनोन्योगृञ्जनोदीर्घपत्रक : ॥ यस्माल्लवणरसे नोनो घोरसखनस्तुप कागुना । दीर्घ नालायपत्रत्वाद् भिवदोसोपवाद्दत्त : ॥ अश्नाति ॰ अशुतेवा । अशभोजने॰ अश् व्यालीना । अशीलंघ येत्युनन् ॥

लष्व: । पुं॰ नर्तके ॥ लष्यते । लष कान्तौ । सर्वनिघृष्वेति साधु : ॥

लसत् । त्रि॰ उल्लसति ॥ प्रकाशमा ने ॥

लसमान : । त्रि॰ दीप्यमाने ॥

लसा । स्त्री॰ हरिद्रायाम् ॥

लसिका । स्त्री॰ लालायाम् ॥

लसितम् । न॰ चेष्टिते ॥

लसीका । स्त्री॰ इक्षुरसे ॥ त्वङ्मांस मध्यगेरसे ॥

लस्त: । त्रि॰ श्लिष्टे । क्रीडिते ॥ शि ल्पयुक्ते ॥ लसश्लेष । लसश्लेष क्रीडनयो : । क्त : ॥

लस्तक : । पुं॰ धनुर्मध्यभागे ॥

नामनि ॥ चिह्ने ॥ लाञ्छ्यते । लाञ्छिलक्षणे ल्युट् ॥

लाट : । पुं॰ देशविशेषे ॥ सथा । अवन्तीतः पश्चिमेतुवैदर्भाद्दक्षिणोत्तरे । लाटदेशः समाख्यातस्तंदेशोयज्ञसिद्धमे ॥ चंद्रके । वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रासः । पुं॰ शब्दालङ्कारविशेषभेदे ॥ यथा । शब्दस्तु लाटानुप्रासोभेदेतात्पर्यमात्रतः ॥ शब्दगतोनुप्रासः । शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच॰लाटानुप्रासः ॥ एकपदानुप्रासश्चत्वये । पदानांसः । सद्भति लाटानुप्रासः उदाहरणम् । यस्य नसविधे दयितादवदहनस्तुहिनदीधितिसस्य । यस्यनसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ यमिशब्दे नसद्भतिसम्भीयते । उदाहरणम् । वदनंवरवर्णिन्यास्तस्याः सत्यंसुधाकरः । सुधाकरः क्वनुपुनः कलङ्कविकलोभवेत् ॥

लाप: । पुं॰ कथने । लपनम् । लप॰ । घञ् ॥

लाभ : । पुं॰ मूलधनादधिकाप्तौ । विक्रेयापटादीनांमूल्यादधिकया प्राप्तद्रव्ये । फले । दृष्टप्राप्तौ ॥ यात्मलाभात्परोलाभो नास्तीति विदुषांमतम् ॥ प्राप्ती ॥ लम्भादेकालप्राप्तौस्थाने ॥ लभ्यते । दुर्लभप्राप्तौ । अकर्तरीतिघञ् । संज्ञायामित्यस्यप्रायिकत्वात् ॥ उत्कृष्टमुत्तमार्थलाभेसम्भवत्यधमं काम यमानोमूर्खः ॥

लामज्जकम् । न॰ वीरणमूले । नलदे । उशीरवत्पीतच्छविकृणविशेषे ॥ लामज्जकंहिमंतिक्तंलघुदोषत्रयाक्षजित् । त्वगामयस्वेदकृच्छदाहपित्तास्त्ररोगनुत् ॥

लालनम् । न॰ यत्नतजेश्करणे । प्रेमपूर्वकबालकादरणे ॥ यथा । लालनेबहवोदोषास्ताडनेबहवोगुणाः । तस्मात्पुत्रञ्चशिष्यञ्चताडयेन्नतुलालयेत् ॥ पञ्चवर्षाणिसुतान्लालयेत्ताडयेत्पिता । ततः षोडशवर्षंतु पुत्रान्विद्यासुशिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनसत्त्वास्नेहंप्रदर्शयेत् ॥

लालस : । पुं॰ लालसायामर्थेषु । त्रि॰ उत्सुके ॥ भृशंलसनमित्यर्थेयङ्न्ताद्घ : ॥

लालसा । स्त्री॰ औत्सुक्ये ॥ तृष्णातिरेके ॥ महाभिलाषे ॥ याञ्चायाम् ॥ शोचे ॥ दोहदे ॥ लव्दृस्पायाम् । औणादिकोच्सच् ॥ यद्वा । लसकाम्यो । भृशंलसन

। वर्णादिभ्योऽञ् । लवणस्य भावः । दृढादित्वात् ष्यञ् ॥ यद्वा । लवणाल्लिट्० स एव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न० विवाहकाले श्वशुराभ्यां दत्तधने ॥ यथा । प्रीत्या दत्तन्तु यत्किञ्चित्० श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकञ्चैव तल्लावण्यार्जितमुच्यते ॥ 'लावण्यं सौभग्यं पुण्यादि० तथाचपाद प्रणतायै सौजादिमत्यै वा स्त्रियै श्वशुरादिनादत्तं तृतीयं स्त्रीधनमित्यर्थः ॥

लाषा । स्त्री० लावपक्षिणि ।

लावुः । ) स्त्री०
लावुकम् । ) न० तुम्ब्याम् ।

लावुका । स्त्री० तुम्बिकाभेदे ॥

लावुकी० सूचवीणायाम् ॥ इ० हा० स्त्री० ॥

लावू । स्त्री० तुम्ब्याम् ॥

लाषुकः । त्रि० लषणशीले ॥ लष्यति० लषतिशीलः । लषकान्ती ॥ लषपतपदेत्युकञ् ॥

लासः । पुं० नृत्यभार्गे ॥ स्त्रीणां नृत्ये । यूषे ॥ लसनम् । लसश्लेषणक्रीडनयोः । घञ् ॥

लासकः । पुं० लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे ॥ विटङ्के ॥ लसति । लस० ण्वुल् ॥

लासिका । स्त्री० नृत्यकारिण्याम् ॥ नर्त्तक्याम् । लसति । लस० ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री० आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न० नृत्ये । सुकुमारनृत्ये । तालल्याश्रये ॥ पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥ अपिच । स्त्रियं यौवनस्थितिला स्यं विविधमुच्यते । यथाभिनयार्थभाविरसे राज्ञे प्रयुक्तने ॥ नायिकानायकौ रङ्गे नृत्यतश्चुरित विराम् । मधुरं वहलीलाभिर्नटीभिर्यं चमत्कृते । वशीकरणविद्याभं सलास्यं यौवतं मतमिति । पास० । लड्लोप्यं म् । सौगन्धिके ॥ पुं० नर्त्तके ॥

लास्यकम् । न० नृत्ये ॥

लास्या । स्त्री० नर्त्तक्याम ।

लिकुचः । पुं० लकुचे । डहौ । वड हलद्० भा० प्र० ॥ लक्यति । लक आस्वादने । बाहुलकादुचप्रत्ययः । पृषोदरादिः ॥ न० चुक्रि ॥

लिक्षा । स्त्री० लिखायाम् ॥

लिखा । स्त्री० यूकाण्डे । लिखिकायाम् । लीक० लीख० इ० भा० प्र० केशकीटे । यूकाभेदे ॥ लिख्यते । लख आलोचने । घञ् । पृषोदरादित्वादस्येत्वम् ॥ परि

लिङ्गम्

मोणविशेषे । कचायाष्टके ॥ यथा । चसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः । इति मनुः ॥ अपि च । जालान्तरगते भानौ यच्चाणु दृश्यते रजः । तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिस्सर्षपस्तुति ॥

लिक्षिका । स्त्री० लिक्षायाम् ॥

लिखनम् । न० लेखने ॥ ब्रह्मलक्ष्मीयायां विधिलिपौ ॥ यथा । यस्य लिखनं पूर्वं यत्काले निरूपितम् । सर्वथा खण्डितुं तद्धि नान्येनापि च शक्यते ॥ विधातुश्च विधातारं ये यल्लिखनं कृतम् । ब्रह्मादीनां च सन्त्राणां नतत्खण्ड्यं कदाचन ॥ ब्र० वै० पु० ॥

लिखितः । पुं० धर्मशास्त्रप्रवर्तके मुनिविशेषे ॥ न० वर्णसंस्थाने । लिपौ ॥ लिख्यते स्म । लिखाक्षरविन्यासे । क्तः ॥ त्रि० लिखितपत्राद्ये ॥ यथा । प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ॥ इति मिताक्षरायां याज्ञवल्क्यः ॥

लिखिताक्षरविन्यासः । पुं० लिपौ ॥

लिगुः । पुं० मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न० चित्ते ॥ लिगति । लगेरिः ।, खरुशङ्कित्विति कुप्रत्ययान्तः साधुः ॥

लिङ्गम् । न० चिह्ने ॥ शिवमूर्तिविशेषे ॥ यथा । नेह लिङ्गार्चनात् किञ्चित्पुण्यमभ्यधिकं क्वचित् । इति विज्ञाय यत्नेन पूजनीयः सदाशिवः ॥ तथा । दुर्गार्चनरतो नित्यं महापातकसम्भवैः । दोषैर्न लिप्यते वीर पद्मपत्रमिवाम्भसेत्याद्यं भविष्यपुराणम् ॥ सांख्योक्तप्रकृतौ ॥ शेफे ॥ धर्मे ॥ व्याप्ये । व्यापकसम्बन्धे ॥ व्यक्ते ॥ तत्त्वलिङ्गं प्रधानस्य । महदादिसूक्ष्मपर्यन्ते ॥ लिङ्गनाज्ज्ञापनात् बुद्ध्यादिषु ॥ लयं गच्छतीति० सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि० पञ्चकर्मेन्द्रियाणि० पञ्चमात्राः मनोबुद्धिरिति सप्तदशात्मके ॥ यथा । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया । शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥ लिङ्ग्यते गम्यतेऽनेनेति० वृत्ताद्यौ ॥ अनुमाने ॥ तत् त्रिविधम् । अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ प्रमाणविशेषे ॥ शब्दसामर्थ्यं लिङ्गम् । यदाहुः । सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते० इति० ॥ सामर्थ्यं रूढिरेव० समाख्या तेन भेदः । तेन सर्वेन्द्रियसदनन्दा

मीतिमन्त्रस्यकुशलवनाङ्गत्वंनतु॰ उलपादिलवनाङ्गत्वम् । तस्यबर्हिर्दर्भीतिलिङ्गात्तल्लवनं प्रकाशयितुं समर्थं स्यात् । एवमन्यत्रापि लिङ्गाद्विनियोगोद्रष्टव्यः । तदिदं लिङ्गं वाक्यादिभ्योबलवत् । अतएवस्योनंतेसदनं कृणोमीतिमन्त्रस्यपुरोडाशसदनकरणाङ्गत्वं सदनं कृणोमीतिलिङ्गात्॰ नतु वाक्यात् । मगसि । अवगम्यतेच्छायतेऽवगम्यतेयेनतल्लिङ्गमितिपूज्यपादाः ॥ पुंस्त्वादी ॥ शिश्नसि । मेहने । अस्यशुभाशुभलक्षणं यथा । दीर्घलिङ्गेनदारिद्र्यं स्थूललिङ्गेननिर्धनः । कृशलिङ्गे नसौभाग्यंह्रस्वलिङ्गेनभूपतिः॥ वाक्यैः कठिनैर्लिङ्गैः परदारतः सदा । रमतेचसदादासीम् मिष्टैर्गोभवतिध्रुवम् ॥ कृशलिङ्गेनसूक्ष्मेण रक्तलिङ्गेनभूपतिः परस्त्रीरमतेनिर्धनारोगांश्चभेभवेत् ॥ कृशलिङ्गेनरक्तेनलभतेचोत्तमाङ्गनाम् । राज्यंसुखस्थिरं व्याङ्ग्याः कन्यकायाः पतिर्भवेत् ॥ इतिसामुद्रकम् ॥ अपिच । दक्षिणावर्त्तलिङ्गोयः सभवेत् पुत्रवान्नरः वामावर्त्ते तथाकन्याः सुपत्राश्चभवन्तिच । स्थूलैः सिरालैः कठिनैर्मैरादारिद्र्यभाजनाः

लिङ्गशरीरम्

। ऋजुभिर्वर्तुलैर्लिङ्गैः पुरुषाः सुखभागिनः । यस्यपादोपविष्टस्य भूमिंस्पृशतिमेहनम् । भोगवान् सतुविज्ञेयोनरोदारिद्र्यभाजनः ॥ भूमौपादोपविष्टस्ययस्यस्पृशतिमेहनम् । भोगवान्सतुविज्ञेयस्तथातु रगमेहनः ॥ स्थूलयन्थियुतेलिङ्गेनरोऽतिसुखभाग्भवेत् । लिङ्गेमस्तुनामर्ज्जीभियतेकृच्छ्रपीडित इति ॥ लिङ्ग्यतेऽनेन । लिगिगतौ । हलश्चेतिघञ् । [illegible] ॥

लिङ्गकः । पुं॰ दन्तशठे । कपित्थे ॥

लिङ्गधारिणी । स्त्री॰ देवीविशेषे । नैमिषेतुमहास्थानेदेवीसालिङ्गधारिणीतिदेवीगीता ॥

लिङ्गपुराणम् । न॰ लैङ्गे महापुराणे । तक्लोकसंख्या यथा । एकादशसहस्राणिलिङ्गाख्यंचातिविस्तृतमिति ॥

लिङ्गवर्द्धनः । पुं॰ कपित्थवृक्षे ॥

लिङ्गवर्द्धिनी । स्त्री॰ अपामार्गे ॥

लिङ्गवृत्तिः । पुं॰ धर्मध्वजिनि । जीविकार्थंजटादिचिह्नधारिणि ॥ जीविकादिनिमित्तमुपाधिभिर्जटादिकम् । धर्मध्वजीलिङ्गवृत्तिरिदंधंतत्तनिगद्यते ॥ लिंगमाश्रमादिचिह्नधारणंवृत्तिर्जीविकाहेतुर्यस्य सः ॥

लिङ्गशरीरम् । न॰ सप्तदशावयवे

व्ययेधातोरङ्ग्स :प्रत्ययस्युट् ।। लिलिवे ।।

लिप्तक : । त्रि० विषाक्तवाणे । दिग्धे ।। स्वार्थे कन् ।।

लिप्ता । स्त्री० घटिकायाम् । दण्डे ।।

लिप्तिका । स्त्री० दण्डे ।। लिप्तेव । स्वार्थे कन् ।।

लिप्सा । स्त्री० इच्छायाम् । वाञ्छायाम् ।। लभे : सन्नन्तादप्रत्ययादिति०पम् ।। लाभेच्छायाम् ।। यथा । यर्थिनिचिषसनिलिप्साप्रासरिद्दिष्यातुदूरलोपासा । चालाक्षपयवपेयरमापसेनेचिताभवतीति ।।

लिप्सु : । त्रि० लब्धुमिच्छौ । लुब्धे ।। लुब्धे । अभिलाषुके ।। लभे : सन्नन्ताडु : ।।

लिवि : । स्त्री० लिपौ । लिखितवर्णे ।। लिप्यते । लिप० । इगुपधात्कित्त्वीन् । बाहुलकात्पत्वस्वम् ।। लिबि : सौत्रोधातुर्वा ।।

लिबिकार : । पुं० लिपिकरे ।। लिबिं करोति ।। कृञ्० । दिवाविभेति ट : ।।

लिम्प : । पुं० लेपनकर्त्तरि ।

लिम्पट : । पुं० विड्गे । इतिद्वारावली ।

लिम्पाक : । पुं० जम्बीरे ।। खरे ।। न० निम्बुकि । पातनीच० इ० भा० ।

लिश : । पुं० नर्त्तके ।। लश्यते । पचाद्यच् । सर्वमिदृष्वं तिसाधु : उपयेयस्वम् ।।

ली : । पुं० श्रेषणे । चपले । लीङ् क्षिप् ।।

लीका । ) लीखा । ) स्त्री० लिक्षायाम् । इतिशब्दरत्नावली ।

लीढ : । त्रि० चाखादिते । भक्षिते ।। लिह्यतेस्म । लिहचास्वादने । क्त : ढत्वधत्वष्टुत्वलोपदीर्घाः ।।

लीन : । त्रि० प्राप्तलये । विलीने ।। कर्त्तरि । लीयतेस्म । लीङ् श्लेषणे । क्त : । स्वादयचोदिताद्रतिनत्वम् ।।

लीला । स्त्री० केलौ ।। विलासे ।। शृङ्गारभावचेष्टायाम् । यदिति । स्त्रीकपादिभि : शृङ्गारभावती० आनक्रियानुकरणे ।। प्रियस्यानुकृतिर्लीलाश्लिष्टावाक्येचेष्टितैः । यत्रप्रियसमागमसावस्तुचित्तविनोदार्थं प्रियश्यावेशभाषादिदृष्टिरसितभणितैरनुकृति क्रियतेसालीलेत्यर्थः तथाहि । प्रप्रसवयसमागमनाभिकाया : तस्या : पुरोवनितचित्तविनोदाय या । चालापवेशगतिहास्यविलोकनाद्यै । प्राप्तेश्वरानुकृतिमाकथयन्तिलीलामितिभरत : ।। शोभायाम् । सायनंलो : ।

लीड् । सम्पदादित्वात्क्विप् । लियंलाति । ला० । आतोनुपेति क : । यद्वा । लेलायनम् । लेला दीप्तौ० कण्ड्वादि : । भिदाद्यङ् । अप्रत्ययादितिवा । पृषोदरादि : । यद्वा । लयनम् । लीडोवाहुल काल्लोगुणाभावस्त ॥

लीलाखेल : । पुं० अतिशक्वरीछन्द: १५ प्रभेदे । तल्लक्षणोदाहरणे यथा एकन्यूनौविद्युन्मालापादौचेल्लीला खेल : । यथा । मायाहोगोविन्द: कालिन्दीकूलच्छायाचक्रे० रासो लास : क्रीडद्गोपीभि : सार्धंलो लाखेल : । मन्दाकिन्यास्तीरोपा न्ते स्वैरक्रीडाभिर्लीला० यद्देवा नामीश. स्वर्वेश्याभि: खेलन्तीभि: ॥ त्रि० विलाससुभगे ॥

लीलावती । स्त्री० केलियुक्तायाम् । विलासवत्याम् ॥ शृङ्गारभावचेष्टा ऽन्वितायाम् । लीलाविशिष्टाया म् ॥ भास्कराचार्यस्यकन्यायाम् ॥ भास्कराचार्यकृतेपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाह रणे यथा । लघुगुरुवर्णनियमविर हितमिहदिशुकलयचतुष्कलमष्टग याम् । द्वात्रिंशत्कलविरचितमिद मतिशयसहृदयहृदयहृत् : स्वहरण- म् । लीलावतिकाभवसिचमत्कारकर्ण

हिनगणजगणभगणकलिता० फ णिनायकपिङ्गलविरचितमङ्गतवृत्त ममलगुम्फनललिता ॥ यथा । गो कोटिंप्रतिदिनमिहवितरन्द्विजवर- निवहेमुदमातनुषेरिपुतिमिरदलन करप्रसरकुशेशयसमितलक्ष्मीवसतिंत नुषे । दुरितविलयमिलितखल गोद्यनृपराजवलयमवलयसिरणे- त्वयिचलतिचलतिमसुधावसुधाधि पकीर्तिंसिंधवरतीरमये । लीला शोभाऽस्त्यस्याम् । मतुप् । ङीप् ॥

लीलोद्यानम् । न० देववने ॥

लुकायित : । त्रि० अन्तर्हिते ॥

लुङ्ग : । पुं० मातुलुङ्गे । बीज पूरे । लुञ्ज्यते । लुजिभाषार्थ: । घञ् । चजोरितिकुत्वम् । न्यङ्क्वा दित्वात् ॥

लुङ्गुष : । पुं० कोलङ्गे ॥

लुठनम् । न० वेल्लने । अश्वस्यभूमौ पुन : पुन : शरीरावघट्टने । लुठ न० द्रु० भा० प्र० ॥

लुठित : । त्रि० अश्वस्यभूमौमुहुर्मुहु: पराहर्त्त श्रे । उपावृत्ते । वेल्लते । अपावृत्ते । परावृत्ते ॥ लुठति स्म । लुठप्रतिघाते । अकर्मकत्वा त्क्त : ॥

लुण्टक: । पुं० शाकविशेषे । नव्या० सू० गौ० भा० प्रसिद्धे ॥

लुण्टाक : । पुं० चौरे ॥

लुण्टाकी । स्त्री० चौरायांस्त्रियाम् ॥

लुण्ठक : । त्रि० स्तेयकारके ॥

लुण्ठनम् । न० स्फललुठिते ॥ लूटइति प्रसिद्धे साहसे ॥ लुठिस्तेये । ल्युट् ॥

लुण्ठाक : । पुं० परमृत्यौ । हिंके । काके ॥

लुण्डिका । स्त्री० } न्यायसारिण्याम् ।
लुण्डी । स्त्री० }
गौडी० इ० भा० प्र० ॥

लुप्तम् । न० चौर्यधने । त्रि० विलुप्ते । लोपवति ॥

लुप्तवर्णपदम् । न० ग्रस्ते ॥ लुप्तोवर्ण : पदंयत्रयथाक्यपदेषामत् ॥

लुप्तसंवत्सर : । पुं० विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्तंराशिं नैतिचेत्पुन : । लुप्तसंवत्सरोज्ञेयोगर्हित : सर्वकर्मसु ॥ अस्यापवादश्च इविमेषिभयिकुम्भे यद्यतीचारगोगुरु : । नतत्रकाललोप : स्यादित्याहभगवान्यम : ॥ अन्यच । मासान्दर्शकाट्गवाप्रभुज्यराशेर्द्वाराशिमुपैतिजीव : भुङ्क्ते नपूर्वंचपुनस्तथापिन लुप्तसंवत्सरमाहुरार्या : ॥ लुप्ताब्ददोषोऽचिमते नमध्येसीमेऽइवाया : सुरनिम्नगाया : ॥

लुप्ताब्द : । पुं० लुप्तसम्वत्सरे ॥

लुब्ध : । पुं० व्याधे ॥ लम्पटे ॥ त्रि० आकाङ्क्षिणि । कृपणे । परधनाभिलाषुके ॥ धर्मार्थस्वद्रव्यत्यागासमर्थे ॥ मातरंपितरंभ्रातॄन्सर्वान्सुहृदस्तथा । अस्निग्धसुलभोलुब्धाऽवजानन : प्रायशोभुवि ॥ लुभ्यतिस्म । लुभगार्ध्ये । गत्यर्थेतिक्त : ॥

लुब्धक : । पुं० व्याधे ॥ स्वार्थे० संज्ञायांवाकन् । आर्द्रायाम् ॥

लुलाय: । पुं० महिषे ॥ लुडति । लुडसंश्लेषणे । इगुपधेतिक : । डलयोरेकत्वम् । आप्नोति । आप्लृ० । अच् । लुलश्चासावायस्व । यद्वा । लुडति । लुडलोडने । भिदाद्यङ् । लुलाविलोडिताआमोथेन । लुलविमर्दनेसौत्रोधातुर्वा ॥

लुलायकन्द : । पुं० महिषकन्दे ॥

लुलायकान्ता । स्त्री० महिष्याम् ॥

लुलाय : । पुं० महिषे । लुडति । लुड० । क : । डलयोरभेद : ॥ यद्वा । लुडाते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसौत्रो धातुर्वा । बाहुलकादायप्रत्यय : ॥ यद्वा । अयते । अय० । अच् । लुलश्चासौअयश्च ॥

लुलित : । त्रि० आन्दोलिते । तरलिते ॥ उत्सृष्टे ॥ लिप्ते । यथा । वात्येदु: स्वातिरेकोमललुलितवपुरिति ॥

दृष्टतरद्रुसीतरजनभा० प्र०

लेण्डम् । न० गूथे । शकृति । लेण्ड इ० भा० प्र० ॥

लेण्डुन : । पुं० इञ्च्येचे ॥ इञ्च्ये स्थानवषट्पश्चलेगड्डुजाश्चापिभावि नश्चत्यागमात् ॥

लेप : । पुं० लेपने ॥ अशनौ । अश नि ॥ अनुशये । अनुपस्वे ॥ स च० सुदृष्टमकार्यमेतत्फलभोग्ये० दृ ष्यनुतस्थागमर्मस्ववासनानिमि- त्त : । स च पुण्ये कर्मणि पुण्यरूप : ० पापे च पश्चात्तापरूपो भवति ॥ लेप नम् । लिप० घञ् ॥ सुधायाम् । चूना० इ० भा० प्र० ॥

लेपक : । पुं० पक्षगण्डे । राज इ० प्र० स.तौ ॥ त्रि० लेपकर्त्तरि ॥ लिंपति । लिप० ण्वुल् ॥

लेपनम् । न० लेपे । चन्दनागुर्वादि नाङ्गविलेपने ॥ देवगृहादिलेपने । चोपना० इ० भा० लिपेर्ल्युट् ॥ पुं० तुरुष्कनामगन्धद्रव्ये ॥

लेपभुक् । पुं० पितामहपित्रादिषु ॥

लेपी । पुं० लेपके । मलगण्डे । शेक र० इ० गौ० दे० भा० । राज० इ० दे० भा० ॥

लेप्य : । त्रि० लेपनीये ॥

लेप्यकृत् । पुं० लेपके ॥

लेप्यमयी । स्त्री० काष्ठादिघटितपुत्तलि कायाम् । अञ्जलिकारिकायाम् ॥

लेभिरम् । न० उलूखले ॥

लेय : । पुं० सिंहराशौ ॥

लेलायनम् । न० चलने ॥

लेलायमान : । त्रि० अतिशयचलन विशिष्टे ॥ यथाग्निर्हविर्गृहयायलेला यमानो भवति ॥

लेलिह : । पुं० सर्पे ॥

लेलिहा । स्त्री० जीवन्यासमुद्रायां म् ॥ यथा । तर्जनीमध्यमानामा.स मा : कुर्यादधो मुखा : । अनामा याविपेद्वामक्रीकत्वाकनिष्ठिका म् । लेलिहानाममुद्रेयं जीवन्या सप्रकीर्त्तिता ॥

लेलिहान : । पुं० शिवे ॥ सर्पे ॥ त्रि० आस्वादिते ॥ लेढातिशय स्वादने । पुन : पुनर्वा स्वादनकर्त्तरि ॥ लिहेर्यङ्लुगन्तात्ताच्छील्ये चा नश्प्रत्यये० गुणोयङ्लुकोरित्य भ्यासस्य गुण : ॥

लेलिहाना । स्त्री० लेलिहायांमुद्रायां म् ॥

लेश : । पुं० अल्पे कणे ॥ लिशति । लिशगतौ । पचाद्यच् ॥ लिश्य ते वा । घञ् ॥

लेशेन : । त्रि० अतिकम्पने ॥ लेशे नाल्पेमापि एजति । एजृ० । पचा द्यच् ॥

लोष्ट : । पुं० इष्टकादिपिण्डे । लोष्टे । ढीम्० ढेला० डला इ० भा० प्र० ॥

लिख्यते॰लिखतिवा । लिख॰ । बा हुलकात्तुन् ॥

लेष्टुघ्नः । पुं॰ लोष्टभेदने ॥

लेष्टुभेदनः । पुं॰ कोटिशे । लोष्टभेदनमुद्गरे ॥

लैसिकः । पुं॰ कटिरोहके । हस्त्यारोहके ॥

लेहः । पुं॰ आहारे । भोजने, खादने ॥ लिहनि ॥ लेहनम् लिह्यास्वादने । घञ् ॥ लेढि । आहारोवेति-घोवा ॥

लेहनम् । न॰ जिह्वास्वादे । जिह्वया रसग्रहणे । चाटना॰इ॰भा॰ ॥ लिहिल्युट् ॥

लेह्यम् । न॰ अमृते । सुधायाम् ॥ त्रि॰लेहनीये । आस्वाद्ये । यज्जिह्वायाभिः चिव्यरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादितच ॥

लैङ्गः । पुं॰ वैयाकरणे ॥ वैयाकरणाविस्त्रीपुंनपुंसकंशब्दजातंतत्त्वमिलिङ्गयथार्थंलिङ्गदयुक्तम् । स्वादेः शब्दस्वभावत्वे सर्वादीनांचिलिङ्गत्वायोगादेकस्यानेकभावत्वायोगात्, औपाधिकधर्मत्वेचतस्यावस्तुत्वात् ॥ न॰लिङ्गपुराणे ॥ त्रि॰-लिङ्गसम्बन्धिनि ॥ लिङ्गस्येदम् । तस्येदमित्यण् ॥

लैङ्गी । स्त्री॰ लिङ्गिन्यामोषधौ ॥

लोकः । पुं॰ जने आत्मनि ॥ लोक्यतेअनुभूयतेशास्त्रोपदेशयोजितबुद्ध्यावमितिव्युत्पादनात् ॥ दर्शने ॥ लोक्यमानेविषये ॥ प्राणिनिकाये ॥ भुवने ॥ त्रयोलोकाः स्वर्गमर्त्यपातालानि ॥ अथसप्तलोकानामानियथा । भूर्भुवः स्वर्महश्चैवजनश्चतपएवच । सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्तिताः ॥ इत्यमर्गे ॥ चाक्षुषप्रत्यक्षविषयेस्मिन्शरीरे ॥ लोकोद्विविधः प्रोक्तआत्मानात्मविभेदतः । मनुष्यपितृदेवाख्योऽनात्मलोकस्त्रिधामतः ॥ आत्मलोकस्यस्वरूपमित्याहुः शास्त्रदर्शिनः ॥ मनुष्यलोकः पुत्रेणपितृलोकस्तुकर्मणा । विद्ययादेवलोकस्तुश्रूयतेहीश्रुतिः ॥ लोक्यतेऽनुभूयते॰दृश्यते॰भुज्यतेवा । लोकदर्शने । घञ् ॥ कर्मफले ॥ प्रसिद्धिमागमः प्राप्तोलोकइत्यभिधीयते ॥ चतुर्दशविद्यास्थानानिलोकादृतिव्याख्यातारः । लोक्यतेज्ञायतेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्तेः ॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्यसर्वस्यलोकशब्दार्थत्वात्देहस्यापिलोकान्तर्गतत्वम् ॥

लोककान्ता । स्त्री॰ ऋद्धिनामौषधे ॥

लोकचक्षुः । पुं॰ सूर्ये ॥ जनलोचने ॥

लोकजित् । पुं॰ जिने । लोकंजयति । त्रि॰ । सत्सूद्विषेत्यादिनाक्विप् । तुक् ॥ लोकान्जयत्युपरमयतीति वा ॥ त्रि॰ लोकजेतरि ॥

लोकतुषार : । पुं॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्जगति ॥ लोकानांत्रयम् ॥

लोकदम्भक : । पुं॰ त्रि : सेनापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ : । पुं॰ शिवे । ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ : ॥ लोकैर्नाथ्यतेयाच्यतेयाकर्म्मणिघञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रो वह्नि : पितृपतिर्नैऋतिर्वरुणोऽनिल : । धनद : शङ्करश्चैव लोकपाला : पुरातना : ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्य्ये ॥

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे ॥ येनोपायेनमर्त्यानां लोकयात्राप्रसिद्ध्यति । तदेवकार्यं ब्रह्मज्ञैरिदंधर्मंसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पुं॰ सूर्य्ये ॥

लोकवाह्य : । त्रि॰ सर्वाचारविवर्ज्जिते ॥ लोकाद्बाह्य : ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव : स्वरितित्रयोलोका : वस्तुभूता : सन्तीतिसङ्कल्पयति ॥

लोकविनायक : । पुं॰ ग्रहविशेषे ॥

लोकविश्रुति : । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ विविधपरिहासकथादिके॰ असत्प्रियाख्याने । न लोकवृत्तंवर्त्तेतवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानामवृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वेस्वेधर्मेप्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्ग्रहणंसङ्ग्रह : । लोकानांसङ्ग्रहोयस्यम् ॥

लोकसार : । पुं॰ प्रणवे ॥

लोकाकाशास्तिकाय : । पुं॰ लोकानामवकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्द्धाखंनाभिश्चरणौक्षिति : । सूर्यश्चक्षुर्दिश : श्रोत्रेतस्मैलोकात्मनेनम : ॥

लोकादि : । पुं॰ ब्रह्मणि । लोकानामादि : प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकंदृश्यवर्गंशुभाशुभकर्मसाक्षितयाधिष्ठाय पश्यतीति॰लोकाध्यक्ष : ॥ लोका

न्निग्ध : स्थूलचचुषः। नीलोत्पला चाविद्वांस: सौभाग्यंश्चावचचुषाम् ॥ स्यात्कृष्णतारकाचाणाम- चणामुत्पाटनंखिल । मण्डलाचा सपापा : स्युर्निःस्वा : स्युर्दीर्घलोचना :॥ इक्स्निग्धाविपुलाभोगी अल्पायुर्यातिचोन्नता । विशालोन्नतासुखिनिर्दरिद्राविषमभ्रुवः ॥ इति गारुडे ६६ ॥ लोच्यतेऽनेन । लोचृदर्शने । ल्युट् ॥ चालोचने॥

लोचनहिता । स्त्री॰ तुत्थाञ्जने ॥

लोचना । स्त्री॰ शुक्लक्रियविशेषे ॥

लोचनामय: । पुं॰ चक्षूरोगविशेषे । अभिमन्ये ॥

लोचनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोचमर्कट : । पुं॰ लोचमस्तके ॥

लोचमस्तक : । पुं॰ खराश्वायाम् । कारव्याम् । दीप्ये । मयूरे । मयूरशिखौषधे । रुद्रजटादौ॰ गौ॰ दि॰ प्र॰ ॥ लोच्यते । लोचृदर्शने घञ् ॥ यद्वा । लोचयति । लोचृ भासार्थे । पचाद्यच् । लोचोदर्शनीयोभासमानोवा॰ मस्तकोऽस्य ॥

लोठनम् । न॰ मुक्तस्तसर्वालने ॥

लोडनम् । न॰ प्रतिघाते ॥

लोटणम् । न॰ लवणद्रव्ये ॥

लोणा । स्त्री॰ क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥ लोणीशाके । लोनिका॰ लोनी॰ इ॰ भा॰ ख्याते ॥ अस्यगुणा : । लोणारूक्षागुरु : कट्वीवातश्लेष्मकरीपटु: । अर्शोघ्नीदीपनीचासाम्नदाग्निविषनाशिनी ॥

लोणाम्ला । स्त्री॰ क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥

लोणारम् । न॰ चारविशेषे । लवणोत्थे । लवणाकारजे । लवणक्षारे । लवणमदे ॥

लोणितम् । न॰ लोनियाख्यशाके ॥ शाकंलोणितसंपक्वंसुदलितंमेघृतेतापितंहिंग्वाद्रैर्यविमिश्रितंसलवणंतक्रेणसंपाचितम् । शेषार्द्रेवामिदंसुघृतसहितंसलेनवावासितंखिन्नंराजकुलसंयुतंसलवणंतक्रेविनापाचितम् ॥ लोणितंशुभयोरीयांरूचंविष्टम्भकारकाम् । दोषघ्नन्मधुरंचैवातश्चामलपित्तकृत् ॥

लोणी । स्त्री॰ लोणायाम् ॥

लोत : । पुं॰ न॰ चास्त्रे । अश्रुणि । चैवास्त्रुणि । न॰ लोप्त्रे ॥ लुनाति । लूञ्॰ । हसिमृग्रिण्वामिदमि लूपूधुर्विभ्यस्तन् । लोतोमेघद्रितिकवत्लिन्दे तिसूचेकैयट : ॥

लोत्रम् । न॰ लोप्त्रे ॥ नेत्रजले ॥ लूञ : सर्वधातुभ्यष्ट्रन् ॥

लोध्र : । पुं॰ गालवे । शावरे । तिरीटे । तिल्वे । मार्जने । लोध॰ इ॰ भा॰ प्र॰ ॥ लोध्रोग्राहीलघु:

निचेत् तथो : प्राप्तमृतांकुश : शमकथाश्रद्धाश्चलवं रयीति ॥ लोभएवमनुष्याणांदेहस्थोमहारिपुः । सर्वदुःखाकर: प्रोक्तोदुःखद : प्राणनाशक : ॥ सर्वपापस्यमूलंहि सर्वदात्मयाथान्वित : । विरोधकृत्विवर्णानांसर्वासं : कारणंतथा ॥ लोभात्प्रवर्जनिधमैवं कुलधर्मंतथैवहि । मातरंभ्रातरंस्त्रियपित रंबान्धवंतथा ॥ गुरुंमित्रंतथाभार्यांपुत्रश्चभगिनींतथा । लोभाविष्टो नकिंकुर्यादकृत्यं पापमोहित : ॥ क्रोधात्कामादहंकाराल्लोभएव महारिपु : । प्राणांस्त्यजतिलोभी नकिंपुन : स्यादनाहतम् ॥ स स्माल्लोभाभिभूतस्तुकिं नकुर्यान्नर : किस्त्वितिदेवीभागवतम् ॥

लोभनी । स्त्री० महाश्रावणिकायाम् ॥

लोभनीय : । त्रि० लुब्धोत्पादके ॥

लोभी । त्रि० गर्धी । लुब्धे । लोभयुक्ते ॥ लोभोस्त्यस्य । इनि : ॥

लोभ्य : । पुं० मुद्गे ॥ त्रि० लोभनीये ॥

लोमम् । न० पुच्छे । लाङ्गूले ॥

लोमघातकी । स्त्री० मांसच्छदायाम् ॥

लोमकर्ण : । पुं० शशके ॥ त्रि० लोमयुक्तकर्णविशिष्टे ॥

लोमघ्न : । पुं० इन्द्रलुप्तकेरोगे ॥ त्रि० लोमघातकी ॥ लोमानिहन्ति ।

हन० । अमनुष्यकर्तृकेचेतिटक्॥

लोम । न० तनूरुहे । रोमणि ॥ रोहति । रुह० । नामन्सीमन्व्योमन् रोमन्लोमन्निति साधु ॥ यद्वा । लूयते । लूञ्छ्ते० बहुलीभावर्थ्या । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद : । पुं० ऋष्यशृङ्गमुनेः पुत्रे । अङ्गदेशीयराजविशेषे ॥

लोमपादपू : । स्त्री० चम्पापुर्याम् । मालिन्याम् । कर्णपुरि ॥

लोमफलम् । न० भव्ये ॥

लोमवान् । त्रि० लोमशे ॥ लोमानि सन्त्यस्य । मतुप् ॥

लोमविष : । पुं० व्याघ्रादौ ॥

लोमश : । पुं० मुनिविशेषे ॥ मेषे ॥ त्रि० अतिशयलोमान्विते ॥ यथा । कदाचिद्धनुरोमुखं : कदाचिल्लोमश : सुखी । कदाचित्स्त्रिंदेहु : खीकदाचिन्नयुवासती ॥ लोमानिसन्त्यस्य । लोमादिभ्य : श : ॥

लोमशकाण्डा । स्त्री० पर्वतीयम् ॥

लोमशपर्णिनी । स्त्री० माषपर्ण्यांम् ॥

लोमशपुष्पक : । पुं० शिरीषवृक्षे ॥

लोमशमार्जार : । पुं० पूतिके । मार्जारिके । सुगन्धिनि । मूषपतने । गन्धमार्जारकेगन्धगोकुला० इ० गौ० दे० भा० प्र० ॥ गन्धमार्जार

वीर्य्यन्तुवीर्य्यं क्षत्कफवातहृत् । क षड्कोठघ्र नेत्र्यं सुगन्धं स्वेदगन्धनुत् ।

लोमशा । स्त्री॰ काकजङ्घायाम् ॥ मांस्याम् ॥ वचायाम् ॥ शूकशिम्ब्याम् ॥ महामेदायाम् ॥ काशीशे ॥ शाकिनीभेदे ॥ शृगाल्याम् ॥ अतिबलायाम् ॥ वराटिकायाम् । शणपुष्प्याम् ॥ वर्वरी ॥ गन्धमांस्याम् ॥ लोमानिसन्त्यस्याः । लोमादित्वाच्छः । टाप् ॥

लोमशातनम् । न॰ लोमशातने ॥

लोमहर्ष : । पुं॰ रोमहर्षे रोमाञ्चे ॥

लोमहर्षण : । पुं॰ सूते । व्यासशिष्ये ॥ न॰ रोमाञ्चे ॥

लोमहृत् । पुं॰ हरिताले ॥

लोमालिका । स्त्री॰ शृगालिकायाम् । दीप्तिकायाम् । उल्कामुख्यां ॥

लोमावली । स्त्री॰ रोमावल्याम् ॥

लोल : । त्रि॰ सतृष्णे ॥ चञ्चले ॥ लोडति । लुडविलोडने । क्वचिद पवाद्विषयेप्युत्सर्गं प्रवर्त्तते अच् । ड लयोरेकत्वम् ॥ यद्वा । लोडति । लोडृ उन्मादे । पचाद्यच् ॥ देश विशेषे ॥

लोलमान : । त्रि॰ चलनशीले ॥ ताच्छील्ये तिप्रानश् ॥ लुठमाने ॥

लोला । स्त्री॰ जिह्वायाम् ॥ कमलायाम् । श्रियि ॥ चञ्चलायांनार्य्याम् ॥ कामनायाम् । शक्करीछन्दः १४ प्रभेदे ॥ तल्लक्षणं यथा । द्विः सप्तच्छिदिलोलाम्सौम्योगौचरणे चेत् ॥ यथा । मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला । त्रैलोक्याद्भुतरूपोगोविन्दोतिदुरापः तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे श्रीनाथेनसमेताखच्छन्दं कुरुकेलिम् । लोलाट्टाप् ॥

लोलार्क : । पुं॰ सूर्य्ये । काशिस्थरवौ । लोलायांवीथ्यांकोटीगङ्गाव्यानगरं धनुः । काशिवर्त्त्य शरीरवर्त्ती : शिवोधन्वीपुनातुमाम् ॥

लोलिका । स्त्री॰ चाङ्गेर्य्याम् ॥

लोलित : । त्रि॰ वस्तुलोलने ॥ चालिते ॥ श्लथे ॥ लोल : सञ्जातोऽस्य । तारकादित्वादितच् ॥

लोलुप : । त्रि॰ अतिलुब्धे ॥ गर्हितं लुम्पति । लुप्लृच्छेदने । लुपसद इति यङ्लुगन्तादच् ॥

लोलुभ : । त्रि॰ लोलुपे ॥ भृशं लुभ्यति । लुभगार्द्धे । धातोरेकाचइति यङ्लुगन्तादच् ॥

लोष्ट : । पुं॰ न॰ मृत्खण्डे । पांशुपिण्डे । लोष्टौ । टीम्॰ ढेला॰ इ॰ भा॰ ॥ लोष्टति । लोष्टसङ्घा [illegible] । पचाद्यच् ॥ यद्वा । लुनाति । लूञ्॰ लोष्टपलितावितिक्तः तस्यसुट्॰ धातोर्गुणश्चनिपातनात्

॥ न॰ लोहमले ॥

लोष्टघ्नः । पुं॰ लोष्टभेदने ॥

लोष्टभेदनः । पुं॰ कोटिशे । लोष्टभङ्गसाधनकाष्ठे ॥

लोष्टमर्दी । त्रि॰ लोष्टमर्दनशीले ॥

लोष्टुः । पुं॰ लोष्टे । दृढमृत्पिण्डे ॥

लोहः । पुं॰ सर्वलोहितच्छागे । पुं॰ न॰ लौहे । लोहविकारे । जोङ्गके । अगुरुणि ॥ सर्वतैजसे रुधिरे ॥ कृष्णायसे । तृणसारे । अश्मके । कालायसे । लोहा॰ इ॰ भा॰ प्र॰ ॥ अथ लोहस्योत्पत्त्यादि यथा । पुरा लोमिनदैत्यानां निहतानां सुरैर्युधि । उत्पन्नानि शरीरेभ्यो लोहानि विविधानि च ॥ लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी । गुरुता दृढतोत्क्लेदकश्मलं दाहकारिता ॥ अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु । लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु ॥ रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत् । कफं पित्तं गरं शूलं शोथार्शः प्लीहपाण्डुताः ॥ मेदोमेहक्रिमीन्कुष्ठं तत्किट्टं तद्वदेव हि । यत्स्यात्कुष्ठामयस्तद्वद्भवेद्धृद्रोगशूलौ गुरुते शरीरे । नानारुजानाञ्च तथा प्रकोपं करोति हल्लासमशुद्धलोहम् ॥ जीवहारि मदकारि चायसं चेदशुद्धिसहितं स्मृतं ध्रुवम् ॥ पाटवं न तनुते शरीरके दारुणां हृदि रुजाञ्च यच्छति ॥ अथ लोहदोषप्रशान्तये शोधनमभिधीयते । पत्तलीकृतपत्राणि लोहस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं लोहस्य पत्राणां विशुद्धिः सम्प्रजायते ॥ अथ लोहमारणविधिः । शुद्धलोहभवं चूर्णं पातालगरुडीरसैः । मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम् ॥ पुटत्रयं कुमार्याश्च कुठारच्छिन्निकारसैः । पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ॥ अन्यच्च । क्षिपेद्द्वादशमांशेन दरदं तीक्ष्णचूर्णतः । मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥ एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात् । सत्यानुभूतियोगीन्द्रैः क्रमोऽयं लोहमारणे ॥ कथ्यतेऽसरालीनकौतुकधियाधुना । सूतकाद्द्विगुणं गन्धं दत्त्वा कुर्याच्च कज्जलीम् । द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ॥ यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके । घर्मे धृत्वा रुबूकस्य पत्रैराच्छादयेद्बुधः ॥ यामद्वयाद्भवेदुष्णं धान्यराशौ न्यसेत्ततः । दत्त्वोपरि शरावञ्च त्रिदिनान्ते समुद्धरेत् ॥

ण्युरच् । टाप् ॥

वाश्र : । पुं॰ दिवसे ॥ शकुनौ ॥ रासभे ॥ न॰ मन्दिरे ॥ चतुष्पथे ॥ वाश्रयति । वाश्॰ । स्फायितञ्चिव ञ्चीश्यादिना - रक् ॥

वाष्प : । पुं॰ क॰ नेत्रजले ॥ भाफइ॰ भा॰ प्र॰ ॥ ऊष्मणि ॥ वायति । ओवै शोषणे॰ वातिवा । बागच्या दी । खष्पशिल्पशष्पवाष्परूपपर्प तल्पा : इतिसाधु : । बाधतेनेत्र मितिवा । बाधते : पोनिपातनात् ॥ लोहे ॥ इतिमेदिनीकर : ॥

वाष्पक : । पुं॰ मारिषे । यथा । मारिषोवाष्पकोमार्ष : प्रोक्तोरक्तश्चसम्मत : ॥

वाष्पका । स्त्री॰ हिङ्गुपत्र्याम् ॥

वाष्पायमाण : । त्रि॰ वाष्पमुद्वमति ॥

वाष्पिका । स्त्री॰ हिङ्गुपत्र्याम् । कार व्याम् ॥ वाष्पमिव । प्रतिकृता विति कन् ॥

वाष्पी । स्त्री॰ वाष्पिकायाम् ॥

वाष्पीका । स्त्री॰ लङ्कपत्र्याम् । वाष्पिकायाम् । रांधुनी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ वाष्पमिव । कन् । टाप् । पृषोदरादि : ॥

वास : । पुं॰ वेश्मनि ॥ अवस्थाने ॥ वासके ॥ वसन्त्यत्र । वसनिवासे । हलश्चेतिघञ् ॥ लघ्वादिविक सि॰ । S ॰ ॥

वासकोष : । पुं॰ वस्त्रपेटके ॥

वासक : । पुं॰ वैद्यमातरि । वृषे । अटरूषे । सिंहास्ये । बांसा॰ वासुटी॰ इ॰ भा॰ प्र॰ ॥ अस्य गुणायथा । वासकोवातकृत्स्वर्य : कफपित्तास्रनाशन : । तिक्तस्तुवर कोहृद्योलघु : शीतल्ट्‌डर्त्तिहृत् ॥ श्वासकासज्वरच्छर्दिमेहकुष्ठक्षया पह : ॥ नानाङ्गविशेषे ॥ त्रि॰ गन्धकृति ॥ वासयति । ण्वुल् ॥ यद्वा । वस्त्रं॰ आच्छादयति । वस्त्राच्छादने । ण्वुल् ॥

वासकर्णी । स्त्री॰ यज्ञशालायाम् ॥

वासकसज्जा । स्त्री॰ स्त्रीयादिनायिका भेदे ॥ भवत्येष्यप्रियवासर : ॰ दूर्त्य निश्चित्य॰ या॰ सुरतसामग्रीसज्जी करोतिसा॰ वासकसज्जा । वास कोवासर : ॥

वासका । स्त्री॰ वासकसज्जा ॥

वासगृहम् । न॰ गर्भागारे । गृहमध्य भागे ॥ शयनगृहे ॥ स्थितिगेहे ॥ वासाय॰ वासस्य वागृहम् ॥

वासतेयी । स्त्री॰ रात्रौ ॥ वसनम्॰ वसति : वसतौसाधु : । पथ्यति थिवसतिस्वपतेर्ढञ् ॥

वासनम् । न॰ धूपने ॥ वारिधान्याम् ॥ वस्त्रे ॥ निक्षेपाधारे ॥ वासे ॥ स्थाने ॥ त्रि॰ वसनेनक्रीते ॥

वाह्यः । त्रि॰ आच्छाद्ये ॥ वस्त्राच्छा दने । यान्म त्रियप्यत् ॥

वाहः । पुं॰ भुजे ॥ धान्यमानप्रभे दे यथाहुः । पलंप्रकुञ्चकंमुष्टिः स्यु पयस्यचतुष्टयम् । चत्वारः कु डवाः प्रस्थश्चतुः प्रस्थमथाढकम् । अष्टाढकोभवेद्द्रोणोद्विद्रोणः सूर्प उच्यते । सार्द्धसूर्पोभवेत् खारीद्वे खार्य्योगोण्युदाहृता ॥ तामेवभा रंजानीयाद्वाहोभारचतुष्टयमिति । अश्वे ॥ वृषे ॥ वायौ ॥ वहति वहप्रापणे । एवन्तीतिघञ् ॥ उ ह्यते॰ऽनेनवा । वहेः कर्मणि॰ कारणेवा॰ घञ् वाह्यतेवा । यन्त्रः । अच् ॥ वाहतेवा । वाहप्रयत्ने । अच् ॥ रथादौ ॥ त्रि॰ व हनकर्त्तरि ॥

वाहकः । त्रि॰ वहनकर्त्तरि ॥ वह ति । वह॰ ण्वुल् ॥

वाहद्विषन् । पुं॰ महिषे ॥ वाहानां द्विषन्॰ वाहेपुद्विषन्वा । सप्त मीतियोगविभागात्समासः ॥

वाहनम् । न॰ हस्त्यश्वरथादौ । यानै युग्ये । पत्रे । धौरेये ॥ देव्यावा हनानियथा । विष्णुब्रह्मशिवैर्दे वैर्ध्रियतेसाजगन्मयी । सितप्रेतो महादेवोब्रह्मालोहितपङ्कजः ॥ ह रिर्हरिस्तुविज्ञेयोवाहनानिमहौज स । समूर्त्यावाहनत्वन्तुतेषांयस्मा त्प्रयुज्यते ॥ तस्मान्मूर्त्यन्तरं कृत्वा वाहनत्वंगतास्त्रयः । यस्मिन्य स्मिन्महामायाप्रीतासिसततंशि वा ॥ तेनतेनैवरूपेणआसनान्यभ वंस्त्रयः । इतिकालिकापुराणम् ॥ वहत्यनेन । वह॰ । करणेल्युट् । वाहनमाहिताहितिनिपातना द्दीर्घः ॥ यद्वा । वाहयति । वहेः स्वार्थण्यन्तात्कर्त्तरिल्युट् ॥ वा हानांप्रेरणे ॥ यथा । वाहनंप्रति वाहानांषड्विधंप्रेरणंविदुः । रागाय चल्गाकशापाष्णिप्रतोदरवभेदतः ॥ चतुर्थभवने ॥

वाहनप्रघः । पुं॰ चश्वे । हये ॥

वाहना । स्त्री॰ निर्वाहयितरि ॥ यथा समग्रोयुष् ॥

वाहवेगः । पुं॰ पशुभेदे ॥

वाहः । पुं॰ अनडुहि ॥ वहति । वह॰ । वहिहाधाञ्भ्यश्छन्दसीत्य सुन्॰ णित् । णोपधाया न्वाह सा ॥

वाहसः । पुं॰ अजगरे । अर्थे । अयाख्ये ॥ जलनिर्याणे ॥ सुनिष ण्णके ॥ वहति । वह॰ । वहि युभ्यांणिदित्यसच् । णित्वाद्वृद्धिः । वाहंगतिं सतीतिवा । योन्तक र्मणि । आतोनुपेतिकः ॥

वाहा । स्त्री॰ बाहौ । भुजे ॥ अजा दित्वाट्टाप् ॥

वाहिकः । पुं॰ ढक्कायाम् ॥ गोवाहे । शकटादौ ॥

वाहितः । त्रि॰ खण्डिते ॥

वाहित्थम् । न॰ हस्तिकुम्भाधोभागे ॥ कुम्भोऽचवातकुम्भः । वाहित्थं वातकुम्भाधस्तिभागुरिः । सचलला टाधोभागः । अवस्थं वहति । बहु॰ । बाधग्रश्रीविधिः । सतिष्ठत्य च । पञ्चयैश्च : । पृषोदरादित्वात् साधुः ॥

वाहिनी । स्त्री॰ तरङ्गिण्याम् । शैव लिन्याम् ॥ सेनायाम् ॥ सेनावि शेषे । त्रिगुणपक्षेषु ॥ यथा । इभाः ८१ । रथाः ८१ । अश्वाः २४३ । पदातयः ४०५ । एतत्परिमाण परिमितायां सेनायामित्यर्थः । समस्तसङ्ख्या ८१० ॥ वहति । बहु॰ । वहादित्वात् णिनिः ॥ वाहाःसन्त्यस्यां वा । इनिः ॥

वाहिनीपतिः । पुं॰ सेनापतौ । सेनान्याम् ॥ समुद्रे ॥ वाहिन्याः सेनायाः । वाहिनीनां नदीनां वा पतिः ॥

वाहीकः । पुं॰ देशविशेषे ॥ तद्देश जाती नाट॰ जह॰ दु॰ मा॰ प्र॰ जातौ ॥ यथोक्तं कर्णपर्वणि २०० अध्याये । तत्रत्य : पुराण सा : कथा : कश्चिद्॰ द्विजोत्तमः । वाहीकदेशं मद्रांश्च कुत्सयन् वाक्य मब्रवीत् ॥ पञ्चानां सिन्धुषष्ठाना मन्तरं ये समाश्रिताः । तान् धर्म बाह्यानशुचीन् वाहीकान् परिवर्ज येत् ॥ शाकलं नाम नगरमापगा नाम निम्नगा । जर्तिका नाम वाही कास्तेषां वृत्तं सुनिन्दितमिति ॥ शतद्रु विपाशा रावती चन्द्रभागा वितस्ता इति पञ्च नद्यः सिन्धुः षष्ठः तन्मध्यदेशो वाहीक इति व्याख्यातारः ॥ स्त्री अश्वभेदे ॥ नवि ॥ वाह् क्वि ॥ वहति । बहु॰ । वहीकादि स्वात् साधुः॰ व्यतनुबलाङ्ग ॥ त्रि॰ वाह्ये ॥ प्राग्दीव्यतीयेष्वर्थे पु॰ हीकादेशः॰ ईकक् ॥ ॰ बहिर्वहिष्टिलोपश्च ॥ वाहीकाः । पुं॰ भूम्नि॰ देशविशेषे । टक्कनाम सु ॥ वाहीकाष्टक्कनामानो वाह्ली कावह्लिकाश्चयादवलिति हेमचन्द्रः ॥

वाहुदारः । पुं॰ खेप्सातके । बहु वारे ॥

वाह्यम् । न॰ याने । युग्ये । पत्रे । वाहने । वर्त्ते ॥ त्रि॰ वहनीये । बलीवर्दादौ ॥ बहिर्थे ॥ बहिर्भवे ॥ वाहयितुं योग्यः । वहेर्ण्यत् ॥ वाह्यं वोढा । बहिष्टिलोपोय ञ् चेतिष्यञ् ॥

वाह्यप्रपञ्चः । पुं॰ आन्तरप्रपञ्चाति रिक्ते ॥ यथा । पृथिव्यादिपञ्च भूततत्त्वजन्यब्रह्माण्ड तदन्तर्भूतोप

द्वयोर्मध्ये ॥ यथा । शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् । विकर्णौ द्वौ विकर्णस्थस्त्रीन् कोणान् द्वे पुरे तथेति विष्णुपुराणम् ॥ दुर्योधनानुजे ॥ त्रि० कर्णरहिते ॥

विकर्णिकः । त्रि० कर्णिकारहिते ॥ पुं० भूमि० सारस्वतदेशे ॥ यथा । काश्मीरास्तु माधुमताः सारस्वता विकर्णिकाः । इति हेमचन्द्रः ॥

विकर्णी । स्त्री० यथाङ्ग्रीमरि० उदारेऽम्बशारिणि ॥

विकर्त्तनः । पुं० अर्के । आर्कशखे । सूर्ये ॥ विकर्त्तयति भक्तं रागात् । छिनत्ति दर्गे । णिजन्तात् ल्युट् ॥ यथा । विशेषविकर्त्तनं यस्य । विश्वकर्मणोऽयमोढत्वात् ॥ अर्कपुत्रे ॥

विकर्म्मकृत् । त्रि० निषिद्धकर्मकारिणि ॥

विकर्म्म । न० शास्त्रप्रतिषिद्धे० व्यापारे ॥

विकर्म्मस्थः । त्रि० निषिद्धकारि । यौऽहैहिकाकर्मणो विरोधीनि यानि कर्माणि० अगम्यागमनादीनि तत्कारिणि ॥

विकर्षः । पुं० । कर्षणे ॥ विकर्षणम् । कृष० । घञ् ॥ बाणे ॥

विकर्षणम् । न० आकर्षणे ॥

विकलः । त्रि० क्षमे ॥ विह्वले ॥ स्वभावहीने ॥ विगता कला यस्य ॥ निष्कले ॥

विकलपाणिकः । पुं० कुणौ । कुण्ठे । विकृतकरे ॥ विकलः पाणिर्यस्य ॥

विकला । स्त्री० ऋतुहीनायाम् ॥ राश्यादिकलायाः षष्टितमांशे ॥

विकलाङ्गः । त्रि० स्वभावतो न्यूनाधिकाङ्गे । अपोगण्डे ॥ विकलमङ्गमस्य ॥

विकली । स्त्री० ऋतुहीनायाम् । गौरादित्वान् ङीष् ॥

विकल्पः । पुं० भ्रमे । भ्रान्तौ ॥ कल्पने ॥ सङ्कल्पविपर्यये ॥ वितर्के । संशये ॥ तुल्यबलरूपविरोधे विकल्पो भवति ॥ यद्वयोर्नाना प्रातीयस्तु यन्त्योर्विकल्पः ॥ विकल्पनम् । क्लृप् सामर्थ्ये । भावे घञ् ॥ विविधकल्पे ॥ विशिष्टकल्पे ॥

विकल्पकः । त्रि० निर्मातरि ॥

विकल्पितः । त्रि० विपरीतत्वेनकल्पिते ॥

विकषा । स्त्री० मांसरोहिण्याम् ॥ मञ्जिष्ठायाम् ॥ विकषति । कषहिंसायाम् । पचाद्यच् ॥

विकसः । पुं० सिन्धुनन्दने ॥ चन्द्रे ॥

विकसत् । त्रि० जृम्भमाणे ॥

विचो । स्त्री॰ वीच्याम् । तरङ्गे ॥ मु॰ द्विरूपकोष: ॥

विचेतन: । त्रि॰ चेष्टारहिते ॥ विमूढचेतनायस्य स: ॥ ( ० ) ॥

विचेता: । त्रि॰ दुर्मनसि । अन्तर्मनसि । विमनसि । विगतचित्ते ॥ भगवद्ध्यानजनितदुरितप्रतिबद्ध विवेकयित्वात्मनि । विक्षिप्तचित्ते ॥ उद्विग्नचित्ते ॥

विचेय: । त्रि॰ मृग्ये ॥

विचेष्टनम् । न॰ अङ्गपरिवर्त्तने ॥

विचेष्टितम् । न॰ विरुद्धाचरणे ॥ व्यापारे ॥

विच्छन्द: । पुं॰ विच्छन्दके ॥ विशिष्टश्छन्दोऽत्र ॥

विच्छन्दक: । पुं॰ ईश्वरसद्मप्रभेदे ॥ विशिष्टश्छन्दोऽभिप्रायोऽत्र ॥ यद्वा । विशिष्टान् ॰छन्दयति॰साभिलाषान् करोति । छदि॰ । ण्वुल् । अन् वा । उपर्युपरिविन्यस्तं तद्विच्छन्दकसंज्ञकमिति भरत: ॥

विच्छर्दक: । पुं॰ विच्छन्दके ॥ उच्छृदिर् दीप्तौ ॥ ण्वुल् ॥

विच्छाय: । पुं॰ मणौ ॥ न॰ पक्षिणां छायायाम् ॥ त्रि॰ हतप्रभे ॥ छायारहिते ॥ विगताछायायस्य ॥

विच्छाया । स्त्री॰ पक्षिच्छायायाम् ॥ क्लीबतोपिता॰छायाबाहुल्यदतिअमरत्वात् ॥

विच्छित्ति: । स्त्री॰ अङ्गहारे ॥ विच्छेदे ॥ हावभेदे ॥ यथा । मण्डनानादरन्यासो विच्छित्ती रूपदर्पत: । आभरणविलेपनादीनां कुसुमितप्रियापराधादीर्ष्यया माद्दरेणस्थानानां सखीनां प्रयत्नेनाधारणं विच्छित्ति: । प्रियैवदत्तं मीतिभिरल्पं स्वल्पमपि विभूषणं विच्छित्तिरित्यन्ये । आकल्पकल्पनाल्पापि विच्छित्ति: कान्तिपोषकृदित्युज्ज्वलनीलमणि: ॥ विच्छेदनम् । छिदिर् द्वैधीकरणे । क्तिन् ॥ छिदे॰ विनाशे॰ विच्छित्तिरितिविकाण्डशेष: ॥ शेषार्थौ । हेमचन्द्र: ॥

विच्छिन्न: । त्रि॰ समालब्धे । क्षते । काटा॰ इ॰ भा॰ ॥ विभक्ते ॥ कुटिले ॥ विशेषणच्छिन्न: ॥

विच्छिन्नावस्था । स्त्री॰ विच्छेदावस्थायाम् । अभिव्यक्तस्यकनिरुतकार्य्यस्यापि॰ केनचिद्बलवताभिभवे ॥

विच्छेद: । पुं॰ वियोगे । विरहे ॥ कान्ताया: कान्तविच्छेदोमरणादतिरिच्यते ॥ विच्छेदनम् । छिदिर्॰ । घञ् ॥

विच्छेदावस्था । स्त्री॰ विच्छिन्नावस्थायाम् ॥

विच्युत: । त्रि॰ विघटिते ॥ विगते ॥

विच्युति: । स्त्री॰ वियोगे ॥

विजन: । त्रि॰ निर्जने । विविक्ते ।

नि : प्रकाशे । रहसि ॥ यथा ।
आहारनिर्हारविहारयोगाः सदैव
सद्भिर्विजने विधेयाः ॥ आमन्त्रान
न्दे ब्रह्मणि ॥ आद्यमन्ते च मध्ये च
नायस्मिन्न विद्यते । येनेदं सततं व्या
प्तं स देशो विजनः स्मृतः ॥ विगतो
जनोऽस्मात् ॥

विजननम् । न० प्रसवे ॥ पुं० सूति
मासि । विजायतेऽस्मिन् । अधौ० ।
करणेति ल्युट् ॥

विजन्मा । पुं० भेदे । सुधन्वाचार्ये ।

विजपिलम् । न० पिच्छिले ॥

विजयः । पुं० जये । अभ्युदये । जयनि
मित्तवत् कर्म ॥ पार्थे । अर्जुनपा
ण्डवे ॥ विमाने । विष्णुपार्षदवि
शे ॥ कृतान्त पितरि ॥ जिनबल
देवे ॥ यमे ॥ कल्किपुत्रे । वत्स
रविशेषे ॥ तत्फलं यथा । अस्यांवै
याक्षयामेघा वर्षन्ति खण्डमण्डले ।
नश्यन्ति सर्वशस्यानि विजयेनावस
याय : ॥ २७ ॥ यात्रायोगान्तरे ॥
यथा । द्विगीशो दिक्पतीर्येन्याऽक्ष
तिश्यसुहृद्धि । विजयो नाम यो
गोऽयं याता राजा जयी भवेत् ॥ सम
स्ताचार्ययोगे ॥ गुरौ वीर्ये केन्द्रयुते बु
धे वा भृगुनन्दने । विजयो नाम यो
गोऽयं यातुर्विजयदः सदा ॥ विजय
नम् । जिजये । परम् ॥ एकादशे
मुहूर्ते । चतुर्दिग्द्वारगृहे ॥ पत्ने

प्रवरे ॥ विजयते ज्ञानवैराग्यैश्वर्या
दिगुणैर्विशिष्टम् । विम्पूर्वाज्जयतेः
पचाद्यच् ॥

विजयकः । पुं० विजयिकुशले ॥ आ
कर्षादित्वात्कन् ॥

विजयकुञ्जरः । पुं० राजवाह्ये मा
तङ्गे ॥

विजयच्छन्दः । पुं० पञ्चशतमौक्ति
कहारे ।

विजयनन्दनः । पुं० सव्यसाचिवंशज
राजविशेषे । अथो । अभिमन्यौ ॥
विजयस्यनन्दनः ॥

विजयमर्दलः । पुं० ढक्कायाम् ।
जयढक्का० इ० भा० ॥

विजयसखः । पुं० श्रीकृष्णे ॥ विज
यस्य सखा । राजाद्यः सखिभ्य-
ष्टच् ॥

विजया । स्त्री० उमायाम् । पार्व्व
त्याम् । दुर्गायाम् ॥ यथा । वि
जित्य पद्मनामानं दैत्यराजं महाबल
म् । विजया सेन सा देवी लोके चैवाप
राजितेति देवीपुराणम् ॥ उमास
ख्याम् ॥ तिथिविशेषे ॥ यथा ।
इषमासि सिता दशमी विजया शुभ-
कर्मसुसिद्धिकरी कथिता । श्रवणर्क्ष
युता सुतरां शुभदा नृपतेस्तु गमे जयस
न्धिकरी ॥ अस्यां नीलकण्ठदर्शन
विधिर्यथा । कृत्वा नीराजनं राजा
बलवृद्ध्यै यथाबलम् । शोभनं खञ्ज

विजोहः । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । यत्रपश्चिदयंहृद्यतेसुन्दरम् । सर्पराजोदितासाविजोहामता ॥ यथा । चालितंश्रीधरेकामकेलीपरे । लिंमयासाधितंमौनमारोपितम् ॥
विज्जुलम् । न॰ तोरे । सायकी ॥ त्रि॰ दिग्धिके ॥
विज्जिलम् । न॰ विजिले ॥
विज्जुलम् । न॰ गुडत्वचि । त्वचे ॥
विज्जुलिका । स्त्री॰ जतुकायाम् ॥
विज्ञः । त्रि॰ निपुणे । अभिज्ञे । शिक्षिते । प्रवीणे । विजानाति । ज्ञाअवबोधने । आतश्चोपसर्गेइति कः ॥
विज्ञप्तिः । स्त्री॰ विज्ञापने । विज्ञाने ॥
विज्ञसुचि । स्त्री॰ अटामासाम् ॥ त्रि॰ सुविधिके ॥
विज्ञातः । त्रि॰ विश्रुते । ख्याते ॥ निश्चिते ॥ यत्परिज्ञानात्सर्वंविज्ञातंभवति ॥ ज्ञाते । विशिष्यज्ञातेर्थे ॥ व्यज्ञायि । ज्ञा॰ । क्तः ॥ यद्वा । विजानाति । मतिबुद्धीतिक्तः ॥
विज्ञाता । त्रि॰ अनुभवितरि ॥
विज्ञानम् । न॰ ज्ञाने । कर्मणि ॥ विज्ञानंज्ञानकर्मणोरितिमेदिनी । कार्मणे ॥ विज्ञानं कर्मणो ज्ञाने

कुरितिहेमचन्द्रः ॥ निश्चये । संशयविषयवस्तुनिज्ञाने ॥ चित्कलौ । विज्ञप्तिरूपेपरमात्मनि ॥ अपरोक्षज्ञानफले । अज्ञानक्लमानुभवे । विभ्रमे ॥ यद्वादिकर्मकौशले ॥ विवेकबुद्धौ ॥ उपासने ॥ शास्त्रार्थविषयज्ञाने । शिल्पमबुद्धौ । शिल्पकर्मणि ॥ विज्ञायतेऽनेन । ज्ञा॰ । करणेल्युट् ॥ विवेकेन ज्ञानंवा ॥ मोक्षेधीर्ज्ञानमन्यत्रविज्ञानंशिल्पशास्त्रयोरित्यमरः । अस्यार्थः । विशेषसामान्यलक्ष॰ णववोधोमोक्षोक्तिः शिल्पंचित्रादि॰शास्त्रंव्याकरणादि । मोक्षे॰शिल्पे॰शास्त्रेयथाधीः सा॰ ज्ञानं॰विज्ञानंचोच्यते॰एवंविशेषप्रवृत्तिः । अन्यत्र॰घटपटादौ॰ याधीः सापिज्ञानंविज्ञानंचोच्यते । यथासामान्यप्रवृत्तिः । मोक्षेधीर्ज्ञानं॰ विज्ञानंयथा । ज्ञानान्मुक्तिरिति॰ मायाचिताच विज्ञानंबुद्धाप्तदेवंप्रयच्छतीति । अन्यत्रयथा । ज्ञानमस्तिसमस्तस्यजन्तोर्विषयगोचरे॰ इति । घटत्वप्रकारकज्ञानमिति । येकेचित्प्राणिनो लोकेसर्वेविज्ञानिनोमताइति । ब्रह्मणोनित्यविज्ञानानन्दरूपत्वात्॰ इति । एवंचिचत्रज्ञानंव्याकरणज्ञानंघटपटविज्ञानमित्यादिकंप्रयुज्य

स्यथ श्रुतिकल्पतरुः । अहमितिप्रत्यये । विज्ञानस्कन्धसूत्यानन्दगिरिः ॥

विज्ञानान्वितः । त्रि० विज्ञानेनान्विते ॥

विज्ञानिकः । त्रि० वैज्ञानिके । प्रवीणे ॥ विज्ञानमस्त्यस्य । व्रीह्यादित्वान्मत्वर्थीयठन् ॥

विज्ञापनम् । न० बोधने । समावना० । बुभावना० इ० भा० प्र० ॥ विपूर्वाण् ज्ञपक्तानानातेल्युट् ॥

विज्ञेयम् । न० परमात्मतत्त्वे ॥ त्रि० विज्ञातव्ये । ज्ञातुमिति विस्पष्टज्ञानार्हे ॥ विज्ञातुंयोग्यः । ज्ञा० । यद्वीयत् । ईर्यति ॥

विज्यम् । न० निर्गुणे धनुषि ॥ विगता ज्यायस्मिन् ० यस्माद्वा० तत् ॥

विज्वरः । त्रि० विगतज्वरे ॥ विगतमनस्तापे ॥ विगतोज्वरोयस्य ॥

विभर्भरः । त्रि० विषमे ॥

विज्ञामरम् । न० चक्षुषः शुक्लवर्णे ॥ वृतिकल्पित् ॥

विज्ञोली । स्त्री० वीथ्याम् । पङ्क्तौ ॥

विटः । पुं० षड्गे ॥ लवणविशेषे ॥ विड्गे । खर्ये ॥ मूषिके ॥ खदिरे ॥ कामुकानुचरे ॥ धूर्ते ॥ कामतन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वेटति । विटशब्दे । इगुपधलक्षणः कः ॥

विटका । स्त्री० वीटिकायाम् ॥ इति कश्चित् ॥

विटङ्कः । पुं० न० गृहप्रान्ते रचितपक्षिस्थाने । कपोतपालिकायाम् ॥ विशिष्यटङ्क्यतेऽत्र । टङ्किबन्धने । घञर्थे तिघञ् ॥ तीरयतान्मधीमपरितर्यङ् मिह्विसेदाकृष्यि ॥ त्रि० सुन्दरे ॥ यथा । तस्मिन्नतीत्यमुनयः षडसज्जमाना : क्वचा : समाभवयसायवसमृकायाम् । देवायचयतगृहीतगदौपरार्द्धकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ श्रुतिभा० ह० स्कन्धे १५ अध्यायः ॥

विटङ्कितः । त्रि० चलङ्कृते ॥

विटपः । पुं० विटाधिपे । पारदारिकश्रेष्ठे ॥ चादित्यपत्रे ॥ पुं० न० शाखापल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ मन्थे ॥ सुष्कवङ्क्षणयोरन्तरे महावीर्ये ॥ विटान्पाति । पा० । धातोरनुपेतिकः ॥ यद्वा । विटानांपानम् । पा० । घञर्थेकः ॥ वेटति० विष्टीवा । विटपाकोपि० शब्दे च । विटपविष्टपविशिपोलपाः ० इ० सौधुः ॥

विटपी । पुं० पादपे । तरौ । वृक्षे ॥ वटे ॥ विटपः शाखाविस्तारोऽस्यास्ति । अतइनिः ॥

विटप्रियः । पुं० मुद्गरवृक्षे । मोगरा० इ० भा० प्र० ॥ विटानांप्रियः ॥

विटमाक्षिक : । पुं॰ धातुविशेषे । ताप्ये । मदीति भाषारी ॥

विटि : । स्त्री॰ पीतचन्दने ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । मैनाख्याम् ।

विट्खदिर : । पुं॰ दुर्गन्धिखदिरे । खदिरभेदे ॥ विड्गन्धि : खदिर : ॥

विट्चर : । पुं॰ ग्राम्यशूकरे ॥ विषं विष्ठां चरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात्कीवा ॥ विवस्वरीवा ॥

विट्ठल : । पुं॰ श्रद्धामुदापकीदेवे ॥ यदाहुरर्थीचीनादाचिणात्या : । विदाज्ञानेनठाम् शून्याम्॰लाति घदत्ते आत्मीयतयाग्रह्णाति । ला॰ । आतोनुपसर्गे इतिक : । विदाहा नेनठानशून्यानलाति गृह्णातियः स्वयम् । अज्ञानुयह इहेवैविट्ठल : कथ्यतेबुधैरिति प्रक्रियाप्रसाद : ॥

विट्पति : । पुं॰ जामातरि ॥ यथा । मातामहंमातुलश्चस्वस्रीयंश्वशुरंगुरुम् । दौहित्रंविट्पतिंबन्धुमृत्विग्याज्यौचभोजयेत् ॥ एतानमातामहादीन् ॰ दशमुख्यश्चोचियाधासस्ते भोजयेत् गुरविंद्यागुरुराचार्यादि : । विट्दुहितातस्या : पति : । इतिकुल्लूकभट्ट : ॥ भोजयेत् श्राद्धे ॰ इतिशेषोबोध्य : ॥ नृपतौ ॥ वैश्यस्वामिनि ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कुखण्याम् । गुवासालि क॰इ॰गौ॰दे॰भा॰प्रसिद्धे ॥

विठर : । पुं॰ वाग्मिनि ॥

विडम् । न॰ लवणविशेषे । पाक्यं । खारीलुण इ॰भा॰ ॥ अस्यगुणायथा । विडंसक्षारमूर्ध्वाधःवातवातानुलोमनम् । अग्निकफमेवातसश्चलघ्वेदिकम् । दीपनंलघुतीक्ष्णं च व्याधिक्वच्चव्यवायि च । विमलानावयिक्षणस्थित गौरवशूलनुत् । विडति । विडभेदने ॥ इगुपधज्ञाप्रीकिर : क : ॥

विडङ्ग : । पुं॰ न॰ वैद्य॰ । चित्रतण्डुलायाम् । कृमिघ्ने । विडङ्गंकट तीक्ष्णोष्णंरुच्यं वह्निकरंलघु । शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत् ॥ वि॰ अभिज्ञे ॥ विडति ॥ विड॰ । विडभक्षेरिंद्रा । विडादिभ्यः किदिल्युङ्च ॥

विडम्बनम् । न॰ अनुकरणप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमान : । त्रि॰ अनुक्रियमाणे ॥

विडम्बित : । त्रि॰ अनुकृते ॥ व्यक्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्ब्य : । त्रि॰ उपहासास्पदे ॥

। तडिघवाते । गुरोरसेच्य : ॥

वितत : । त्रि॰ विस्तृते ॥ विशेषेणत स : ॥

वितति: । स्त्री॰ विस्तारे ॥

वितथम् । न॰ अनृतवचसि ॥ त्रि॰ तद्वति ॥ विगतंतथासत्यंयस्मात् । तत्॰ वितथम् । अजितियोगविभागात्समासान्तोऽच् ॥

वितन्द्र : । त्रि॰ जागरूके ॥ तन्द्रारहिते ॥ विगतातन्द्रायस्य स : ॥

वितन्यमान : । त्रि॰ वितायमाने ॥ तनोते : कर्मणिलट : शानजादेश : ॥

वितन्वन् । त्रि॰ विस्तारयति ॥

वितमा : । त्रि॰ तमोगुणरहिते ॥

वितरणम् । न॰ दाने ॥ तृप्लवनतरणयो : विपूर्व : । भावेल्युट् ॥

वितर्क : । पुं॰ ऊहे ॥ संशये ॥ विपरीततर्के ॥ वितर्कणम् । तर्कभाषायांचुरादौ । भावेघञ् । धामसू पवी ॥

वितर्कणम् । न॰ वितर्के ॥ तर्क॰ । ल्युट् ॥

वितर्दि : । स्त्री॰ वेदिकायाम् ॥ विगतादर्दि:हिंसाऽस्या : । तर्दहिंसायाम् । सर्वधातुभ्यइन्नितीन् ॥

वितर्द्धिका । स्त्री॰ वेदिकायाम् ॥ स्वार्थेक : ॥

वितर्दी । स्त्री॰ वेदिकायाम् ॥ कृदिकारादितिङीष् ॥

वितलम् । न॰ पातालप्रभेदे ॥

वितस्ता । स्त्री॰ नदीविशेषे ॥ तीर्थविशेषे ॥ काश्मीरेवितस्ताख्यनागसद्मनमस्ति ॥

वितस्ति : । पुं॰ स्त्री॰ कनिष्ठयासह विततेऽङ्गुष्ठे । द्वादशाङ्गुलपरिमाणे ॥ वितस्यति॰ वितस्यतेवा । तसु उपक्षये । वीतसेरितिति : ॥

वितान : । पुं॰ न॰ यज्ञे ॥ क्रतुकर्मणि । गार्हपत्यकुण्डस्थ गामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारे ॥ पाद्वी । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न॰ वृत्तविशेषे ॥ अवसरे ॥ त्रि॰ मन्दे । तुच्छे ॥ शून्ये ॥ मन्दे ॥ विततमम्॰ वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानक : । पुं॰ माडवृक्षे ॥ पुं॰ न॰ चन्द्रातपे ॥

वितानतनिका । स्त्री॰ पटमण्डपर क्यौ ॥

वितानमूलकम् । न॰ उशीरे ॥

वितायमान : । त्रि॰ वितन्यमाने । विस्तीर्यमाणे ॥ वितनोते : कर्मणि लट: शानजादेश: । तनोतेर्यकीति॰ धा॰ आकारादेश : ॥ विटङ्किते । अखण्डकृते ।

वितिष्ठमान : । त्रि॰ अवतिष्ठमाने ॥ समवप्रविभ्यस्थइत्यात्मनेपदम् ॥

नदाहदन्निरसावलीति ॥ विदारय ति । दृविदारणे० खन्त : । यथा याच् । गौरादि:॥ विदार्या :क्षर्म मूलक्० विदारी । यनुदाघादेखे ख्यत: ०पुष्पम् लेखुवक्तुलमिति० खु पि० यृक्षवद्भाव : ॥

विदाश : । पुं० क्रकचपादे । ज्ञव याति ॥

विदाहि । न० परियामेऽमूत्यपाकमु पयाति० दाहजनकद्रव्ये ॥ विदा हिद्रव्यम् द्वारमक्ल सुर्यात्तत्पाद्दधा न् । दृ दिदाह्ष्सकमयेत्याकंमक्ष तितविरात् ॥

विदिक्चक्र : । पुं० दृविदाह्ग्रथ विधि

विदित : । पुं० कवौ ॥ चि० बुधि ते । ज्ञायते । ख्याते । विदितक्रिय यातिप्रयेनात्रे । विदितक्रियाकर्म भूते । यथा । तस्मिन्ब्रह्मविवि द्विवेविग्रसम्भवेविदिवविदितम् । धारणम्दिविदिताणीघटकर्यादा- ययाऽवगम्यर्मे ॥ ७५ । श्रुते ॥ प्रार्थितेि ॥ ध्यान्तज्ञावथति ॥ प्र श्युपगते ॥ व्याकृते ॥विद्यतेस्म । विदस्ज्ञाने । क्त : । यज्ञविभाषेती ट् ॥ विदितंवेदनमस्यास्तिवा । प्र र्मचायच् ॥

विदिश् । स्त्री० यपदिशं । अपदिशे । दिशोर्मध्ये । अग्निनिर्ऋतिवा

व्वीशानमध्यचतुष्टये ॥ दिग्भ्यां विनिर्गता० प्रान्तादिवत् ॥

विदिशा । स्त्री० नगरीविशेषे ॥

विदीर्ण : । चि० क्षतविदारणे । चीरा० फाडा हु० भा० ॥ हु० । धर्मविदा : । पहाद्दन्० रदर : । रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु : । पुं० हस्तिकुम्भयोर्मध्यभागे ॥ कुम्भौतुपिण्डौशिरसस्तयोर्मध्ये विदु : पुमान् ॥ वेत्तिसंग्रामवधा सेन । विद० । बाहुलकात्कु : ॥

विदुर : । पुं० नागरे । धीरे । धृत राष्ट्रानुजे । कौरवाणांसञ्चिवे ॥ चि०ज्ञानशीले ॥ वेदनशील : । विदिभिदिच्छिदे : कुरच् ॥

विदुल : । पुं० चम्बुवेतसे ॥ वेतसे ॥ जम्बरसे । बोले । वेत्तिविद्वतेवा । बाहुलकाद्दुलच् ०सुपावाभावश्च ॥ अ म्बवेतसे ।

विदुषी । स्त्री० पण्डितायांनार्याम् । वेत्ति । विदे : शतुर्वसु : । उगित श्चेतिङीप् ॥

विदुष्मती । स्त्री० पण्डितायांयो- र्याम् ॥

विदून : । चि० परितप्ते ॥ विदूयते स्म । टुदुउपतापे । क्त : । स्वादि भ्यइतिनिष्ठानत्त्वम् ॥ विशेषेणदू नेवा ॥

विदरम् । न० देशविशेषे । वालवा

शे ॥ याज्ञवल्क्ये : समीपवर्त्ति निनगरे ॥ त्रि॰ अतिदूरस्थदेशादौ । विप्रकृष्टे ॥

विदूरजम् । न॰ वैदूर्यमणौ ॥

विदूरथः । पुं॰ राजविशेषे ॥

विदूरभूमिः । स्त्री॰ विदूरदेशे ॥

विदूराद्रिः । पुं॰ रोहणपर्वते ॥

विदूषकः । पुं॰ क्रीडनीयकपात्रे । विङ्गे । विटे । व्यलीके । कामकेलौ । चाटुबटौ । वासन्तिके । वैहासिके । प्रहासिनि । परनिन्दाकरे । खले । अभीरौ । सूचके । वाएटके ।परद्वेषिणि ॥ नायकविशेषे ॥

विदेशः । पुं॰ परदेशे । कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

विदेहः । पुं॰ जनकान्वयभूमिपे । मैथिले ॥ विदेहाः । पुं॰ भूम्नि । देशविशेषे । तीरभुक्तौ । तिरुहित॰ छ॰ भा॰ प्र॰ ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभूः समाख्याता तीरभुक्त्यभिधः स तु ॥ त्रि॰ कायशून्ये । निर्देहे ॥

विदेहमुक्तिः । स्त्री॰ मुक्तिविशेषे ॥ सा यथा । ततः कालवशादेव प्रारब्धे तु क्षयं गते । वैदेहीं मामकीं मुक्तिं याति नास्त्यत्र संशय इति ॥ सा ततो जीवन्मुक्त्यनन्तरम् ॥

विदेहा । स्त्री॰ मिथिलायाम् ॥

विद्धः । त्रि॰ वेधिते । कृतच्छिद्रे । क्षिप्ते । सदृशे । बाधिते । ताडिते ॥ विध्यते स्म । व्यध ताडने । क्तः । ग्रहिज्येति सम्प्रसारणम् ॥

विद्धकर्णः । पुं॰ विद्धकर्ण्याम् ॥ त्रि॰ क्षतकर्णविधे ॥ विद्धौ कर्णौ यस्य ॥

विद्धकर्णा । } विद्धकर्णिका । } स्त्री॰ विद्धकर्ण्याम् ॥

विद्धकर्णी । स्त्री॰ पाठायाम् । अम्बष्ठायाम् ॥ विद्धौ कर्णौ यया॰ यस्मात् वा । द॰ अथार्थे ङीष् ॥

विध्यर्थः । पुं॰ विधिफले ॥ कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वञ्च तिताधिकाराद्दर्शनम् ॥ भाट्टमते विध्यर्थस्तु॰ श्येनफलस्याभिचारस्यानर्थहेतुत्वादधर्मत्वम्॰ श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव । अथ पदव्याख्यात्नु॰ फलस्वभावादेर्निषिद्धस्यैवेति । फलतोऽनर्थहेतुत्वेन तु॰ शिष्टानां श्येनानां धर्मत्वे न व्यवहारः । तदुक्तम् । फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते ॥

विध्वंसः । पुं॰ विनाशे ॥ विधि

ष्टोध्वंसः ॥

विद्यमानः । त्रि॰ वर्त्तमाने ॥

विद्या । स्त्री॰ उमायाम् । शिवायाम् । दुर्गायाम् ॥ मन्त्ररूपायाम् । देवतात्मनि । उपासनायाम् ॥ विज्ञाने ॥ मोक्षविषयायाम् ब्रह्मविद्यायाम् ॥ अनाहतसंविदाद्यात्मापद्मायाम् ब्रह्माकारान्तःकरणवृत्तौ ॥ आत्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥ शान्ति ॥ आन्वीक्षिकीत्रयीवार्त्तादण्डनीत्यासु चतसृषु ॥ यथा । आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिञ्च पार्थिवः । तद्विधैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥ आन्वीक्षिक्यात्मविज्ञानं॰धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥ विद्यावतस्सर्वैतायोगक्षेमाय देहिनाम् । विद्याविनीतो नृपतिर्न कृच्छ्रे व्यवसीदति ॥ इति ॥ पुराणादिचतुर्दशसु ॥ यथा । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ॥ अष्टादशविद्यासु ॥ यथोक्तं विष्णुपुराणे । अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः ॥ इति ॥ तत्रा



ङ्गानि षट्॰यथा । शिक्षाकल्पोव्याकरणं निरुक्तं छन्दोज्योतिषमिति । ऋग्यजुःसामाथर्वाख्याः वेदाश्चत्वार ईरिताः । विचारो वेदवाक्यानां मीमांसा प्रोच्यते बुधैः ॥ सा च पूर्वोत्तरभेदाद्द्विधा । तथाहि । कर्मप्रतिपादनपरा जैमिनिप्रणीता द्वादशाध्यायी॰पूर्वमीमांसा । ब्रह्मप्रतिपादनपरा व्यासप्रणीता चतुरध्यायी॰उत्तरमीमांसेति । पदार्थनिर्णयपरं तर्कशास्त्रं न्यायः॰अत्रैव वैशेषिकनयस्यान्तर्भावः । मन्वादिविरचितं धर्मशास्त्रम् । कापिलपातञ्जलपाशुपतपाञ्चरात्रादीनामागमानामपि धर्मशास्त्रेऽन्तर्भावः । सर्गादिपञ्चलक्षणलक्षितम्॰सब्राह्ममार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवराहाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्कन्दभेदादष्टादशविधं पुराणम् । तदुक्तम् । मद्वयं भद्वयञ्चैव॰ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूस्कानि पुराणानि विदुर्बुधाः ॥ उपपुराणानामप्यत्रैवान्तर्भावः । रोगोपशमपूर्वकानन्दफलकोऽष्टस्थानसंयुत आयुर्वेदः । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादकमन्त्रसहितः पादचतुष्टयात्मको धनुर्वेदः । पदार्थस्थिततानपरिच्छेदप्रयुक्तावधाने पृथक्षड्जादि

स च तदुद्देशेन गुणमात्रं विधत्ते । यथा दध्ना जुहोतीत्यत्र • होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वात् होमोद्देशेन • दधिमात्रविधानं • दध्ना होमं भावयेदिति । यत्तूभयमप्राप्तं • तत्र विशिष्टं विधत्ते । यथा • सोमेन यजेतेत्यत्र • सोमयागयोरप्राप्तत्वात् • सोमविशिष्टयागविधानम् । सोमपदे मत्वर्थलक्षणया • सोमवता यागेनेष्टं भावयेदिति • वाक्यार्थबोध : । नचोभयविधाने वाक्यभेद : • प्रत्येकमुभयस्याविधानात् • किन्तु • विशिष्टस्यैकस्य विधानात् । विधिश्चतुर्विध : नियोगविधिरधिकारविधि : प्रयोगविधिश्चेति । विधिरत्यन्तमप्राप्तौ नियम : पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयते ॥ अप्राप्तप्रापको विधिरिति वैयाकरणा : ॥ न्यायमते विधिर्यथा । प्रवृत्ति : कृतिरेवात्र सा चेच्छातो यतस्ततः । तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥ विधिजन्यज्ञानात् • प्रवृत्तिर्दृश्यते • सा • इच्छात : • चिकीर्षात : • चिकीर्षाञ्च कृतिसाध्यत्वेष्टसाधनत्वज्ञानात् • तज्ज्ञानस्य विषय : कार्यत्वमिष्टसाधनत्वञ्च विधिरिति प्राचीनमतम् । स्वमतमाह • तज्ज्ञापकोऽथवेति । इष्टसाधनत्वानुमापकतयाभिप्रायो विधिप्रत्ययार्थ : । इति



कुसुमाञ्जलि : ॥ विधिविधायकवाक्यमित्यायसूत्रम् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधि : • अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि ॥ विधीयतेऽनेनसुखदु : खे । कुधाञ : • उपसर्गे घो : कि : • ॥ विधत्ते इति विधि : । वाहुलकात् कर्त्तरि कि : ॥ यद्वा । विधविधाने । इन् । इगुपधात् किदिति किस्त्वान्नगुण : ॥ विधानमनेनवा । पूर्ववत् कि : ॥

विधिगोचर : । त्रि• विधिविषयीभूते ॥

विधिघ्न : । त्रि• शास्त्रघ्ने ॥

विधित्समान : । त्रि• विधातुमिच्छति ॥

विधित्सा । स्त्री• विधातुमिच्छायाम् ॥ विध् धाञ् धारणे : सनिमीमेत्यादिना • इकार : । अत्रलोपोऽभ्यासस्येत्यभ्यासलोप : तत : स्त्रियामित्यनुवृत्तौ • अप्रत्ययादितिअप्रत्यये टाप् ॥

विधित्सित : । त्रि• विधातुमीप्सिते । कर्त्तुमिष्टे ॥

विधित्सु : । त्रि• विधातुमिच्छौ ॥ विपूर्वधाञ धातो : सन्नन्तादुप्रत्यय : ॥

विधिदर्शी । पुं• सदस्ये । न्यूनाधिकविचारकेऽस्त्विग्विशेषे ॥ विधिं द्रष्टुं शीलमस्य । णिनि : ॥

विधिदृष्ट : । त्रि• यथाशास्त्रं निश्चिते ॥ विधिनादृष्ट : ।

विधिदेशक : । पुं॰ सदस्ये । विधिद र्शिनि ॥

विधियज्ञ : । पुं॰ विधिनेनानुष्ठीयमा नेवाज्ययज्ञे । दर्शपौर्णमासादौ ॥ विधिविषयोयज्ञ : ॥

विधिवत् । अ॰ यथाविधि । विध्यनु सारेणेत्यर्थे ॥

विधिविषय : । त्रि॰ विधिजन्यप्रय त्नभाव्ये । विधेर्विषय : ॥

विधिहीन : । त्रि॰ यथाशास्त्रबोधित विपरीते । विधिनाहीन : ॥

विधु : । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ । ब्रह्म णि ॥ राक्षसे । विध्यतिविरहिणम् ॰विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्य : कु : । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षय : । पुं॰ चन्द्रक्षयायाम् ॥

विधुत : । त्रि॰ त्यक्ते । निरस्ते ॥ क म्पिते ॥ विशेषेणधुत : ॥

विधुति : । स्त्री॰ कम्पने ॥

विधुन्तुद : । पुं॰ राहौ । सैंहिकेये ॥ विधुंतुदति । तुद॰ । विध्वरुषोस्तु दइतिखश् । मुम् ॥

विधुपञ्जर : । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दा क्षायिण्योविधुप्रिया : इतिकोशा न्तरम् ॥

विधुरम् । न॰ प्रविश्लेषे । वैकल्ये

त्रि॰ विकले । विगतधू : कार्यभा र : । ऋक्पूरित्यप् । धुरोविगतद्र तिप्रादिसमासोवा । न॰ प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् ॥ शू॰ मे॰ ॥

विधुरित : । त्रि॰ विश्लिषिते ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादि भ्यइतिङित्त्वाद्गुणाभाव : ॥

विधूत : । त्रि॰ कम्पिते ॥ त्यक्ते ॥ वि धूयतेस्म । धूञ्कम्पने । क्त : । य स्यविभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादि : । ल्युट् । धू ञ्प्रीञोर्नुग्वक्तव्य : ॥ पक्षादीना मुपावकम्पने ॥

विधूनित : । त्रि॰ व्याहते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि॰क्त : । धूञ् प्रीञोरितिनुगागम : ॥

विधूम्र : । पुं॰ धूसरे । अव्यक्तमिश्रि तवर्णे ॥ त्रि॰ तद्वति ॥

विधृत : । त्रि॰ विधारिते ॥ विशेषेण धृते ॥ विरुध्ये ॥

विधृति : । स्त्री॰ विधरणे ॥

विधेय : । पुं॰ मन्त्रे ॥ विधीयतेवि नियुज्यतेवाक्यमनेनकर्मणीत्यर्थे नेतिहरिहरभाष्यम् ॥ त्रि॰ विनय ग्राहिणि । वचनेस्थिते ॥ विधिप्र त्ययोधविषये ॥ यथा । अनुवादम

विनयस्थ : । त्रि० विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । स्था० । क : ॥

विनया । स्त्री० बलौषधौ ॥ वाट्यालके ॥

विनयी । त्रि० विनयान्विते ॥ विनयो ऽस्यास्ति । इनि : ॥

विनर्द : । पुं० ऋषभकूजितसमीश्वरविशेषे ॥ विशिष्टो नर्द : ॥

विनशनम् । न० तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्या : प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्ट : । त्रि० अन्तर्हिते ॥ विनश्यति स्म । पावकदर्शने । गन्धयुक्तत : ॥ छिन्ने । भिन्ने ॥ नाशाश्रये । ध्वंसविशिष्टे ॥ पतिते ॥

विनष्टि : । स्त्री० विनाशे ॥ अशिभावेक्तिन् ॥

विनस : । त्रि० विगते । गतनासिके ॥

विना । अ० वर्जने । पृथक् । अन्तरेण । ऋते । विकृष्टे । विनञ्भ्यांनानाञौ नसहेति० निषेधार्थाद्विशब्दात् ॥

विनाकृत : । त्रि० विरहिते । भिन्ने ॥ इ० त्रि० ॥

विनाभ : । पुं० शरीरस्थनमनायाम् । व्यथयापुमोनमने ॥ विनमनम् । भाग । घञ् ।

विनामक : । पुं० अधिमासे ॥

विनायक : । पुं० विघ्नराजे । गजानने । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ जिने ॥ गुरौ ॥ विनयति हितमनुशास्ति । णीञ् ० । ण्वुल् ॥ विशिष्टोनायकइतिवा ॥ विगतोनायकोनियन्ताऽस्येतिवा ॥ त्रि० नायकवर्जिते ॥

विनायिका । स्त्री० तार्क्ष्यपत्न्याम् ॥

विनारुहा । स्त्री० विमर्पिकायाम् ॥

विनाश : । पुं० अदर्शने । विनष्टे ॥ ध्वंसे ॥ विगमगम् । अप्रदर्शने ॥ । घञ् ॥

विनाशक : । त्रि० विनाशकर्त्तरि ॥ विनाशयतितत्कौशादि : । णश० । विपूर्वोहेतुमण्ण्यन्त : । निन्दहिंसक्लिशखादविनाशपरिक्षिपेत्यादिनावुञ् ॥

विनाशी । त्रि० अनित्ये । देशकालतस्त्वात्मकविविधपरिच्छेदवति ॥ विनष्टुंशीलमस्य । णिनि : ॥ विनाशवात्वाशीले ॥

विनाशोन्मुख : । त्रि० पक्वे ॥ नाशोद्यते ॥ विनशनंविनाश : । भावेघञ् । उद्गतमुखमारभ्मोऽस्य । विनाशोऽन्मुख : ॥

विनासक : । त्रि० अनासिके । गतनासिके ॥ विगतानासायस्य : ॥

विनाह : । पुं० कूपाननपिधानके ॥ अपयस्थने । णलध्वे तिघञ् ॥

वितरि ॥

वृषाक्षी । स्त्री॰ महामेदायाम् ॥

वृषालय : । पुं॰ स्वर्गे । पक्षिणि ॥

वृषाश्रयी । पुं॰ महाद्रोणके ॥

वृषेशय : । पुं॰ विष्णौ ॥ वृषे शेते । शीङ्॰ । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥

वृषोत्पल : । पुं॰ कर्णिकारे ॥

वृजन : । पुं॰ केशे । न॰ पापे । आकाशे । वृणक्ति॰ मुच्यतेऽसौ । वृजीव र्जने । कृपृवृजीत्यादिनाक्यु : ॥

वृजिन : । पुं॰ केशे । न॰ कल्मषे । पापे ॥ रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपसंसारफलकर्मणि ॥ पापवत्पुण्यस्याप्यनिष्टफलत्वात् ॥ त्रि॰ कुटिले । वक्रे । वृष्णी । स्त्री॰ । वृजी : किवेति॰ इनच् ॥

वृजिनविद्॰ द् । त्रि॰ दु:खहन्तरि ॥

वृत : । त्रि॰ वृते । व्यावृत्ते । ज्ञातवरणे ॥ स्वयंवराद्रौस्त्रीज्ञातवराद्रौ ॥ त्रियतेस्म । वृञ् वरणे । क्त : । आवृते ॥

वृतकौघा । स्त्री॰ देवदाल्याम् ॥

वृतपथा । स्त्री॰ पुष्पदाल्यामोषधौ ॥

वृतपुष्पा । स्त्री॰ वृतपथायाम् ॥

वृति : । स्त्री॰ वरणे । वेष्टने । वाटे । यान्त्वृतिपामोपमसिविविधयेष्ट कण्टकशाखावरणे ॥ वरणम् । वृञ्॰ । क्तिन् ॥ गोपने ॥



वृतिकर : । पुं॰ विकङ्कतवृक्षे ॥ त्रि॰ वृतिकारके ॥

वृतिस्थ : । पुं॰ सरटे ॥ त्रि॰ वृतौ तिष्ठति ॥

वृत्त : । पुं॰ कूर्मे पुं॰ न॰ पद्ये यथा । पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत् ॥ वृत्ते ॥ चारित्रे । वेदमीधिताचारस्य परिपालने ॥ छन्दसि ॥ कृतिच्छन्दोभेदे । यथा । वृत्तमीदृशमनुनाम तीरजौरजौरजौ गुरुलघुश्च । यथा । चित्तवृत्तकौशयामितगर्वमदेकदचविभ्रमीपरागमानसहयेविलासस म्पदाकलाकुतूहलेन । य : समं भ्रमन्न्नभाषणे : सुराङ्गनानिभे : सुखं समेत्य विष्णुरङ्गनाखचित्तपद्मकोषषट्पद : समेत्तदाव्व ॥ त्रि॰ अधीते ॥ वृत्तव्यमनिपूर्णमितिनिपातित : । वृत्तं व्याकरणम्॰ अधीतमित्यर्थ : ॥ अतीते । अतिवर्तुले । मृते । दृढे । वर्त्तते स्म॰ वृत्यतेस्मवा । वृतु वर्त्तने । गत्यर्थेति क्त : ॥ वर्त्तनम् । वृत्तवर्त्तेनिवरणे वा । भावे क्ता ॥

वृत्तकम् । न॰ गद्यभेदे ॥ तल्लक्षणोदाहरणे यथा । अकठोराऽक्षरं स्वल्पसमासं वृत्तकं मतम् ॥ यथा । सखिजयाखिलेश्वरजगतांगति : परमपुरुष : पुरुषोत्तमोऽसदानयमरेयभगु

पित्त । वृन्ताकं स्वादु तीक्ष्णोष्णं कटु पाकमपित्तलम् । ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु ॥ तद्बालं कफपित्तघ्नं वृद्धं पित्तकरं गुरु ॥ वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् । कफमेदोऽनिलामघ्नमत्यर्थं लघुदीपनम् । तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् ॥ अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् । तदर्शःसु विशेषेण हितं हीनञ्च पूर्वतः ॥ पूर्वतः स्मृतात् ॥ भोजनं भिषग्वृन्ताकं वृन्ताकं भिषग्वृन्ताकम् । सवृन्तं भिषग्भैषज्यं सतैलं भिषग्रामठम् ॥ सर्वेषां शाकजातीनां वृन्ताकं श्रेष्ठनायकम् ॥

वृन्ताकी । स्त्री० वार्त्ताक्यां ॥

वृन्तिका । स्त्री० वृन्तितायाम् । कटुक्याम् ॥

वृन्दः । पुं० दशार्बुदे । शतकोटौ । महार्बुदे । सङ्ख्ये ॥ न० समूहे ॥ वृन्दारी वृषभक्ष्य । वृन्दादयश्चेति साधुः ॥

वृन्दा । स्त्री० तुलस्याम् ॥ जलन्धरस्य पत्न्याम् ॥ केदारराजकन्यायाम् । राधापीडश्च नामान्तरं तस्यामपि शेषे ॥

वृन्दारः । वि० मनोज्ञे ॥

वृन्दारकः । पुं० अमरे । देवतायाम् । सुरे ॥ प्रशस्तं वृन्दं यस्य सः । शृङ्गवृन्दाभ्यामारकन् । स्त्रियां तु कापुंसिकावृन्दारकाणामितिवक्तव्यमिति० वृन्दारका० वृन्दारिकेत्युभयम् ॥ यूथपतौ ॥ यथा । वृन्दारकः सुरश्रेष्ठे मनोज्ञे यूथपातरी तिव्याडिः ॥ त्रि० मनोज्ञे ॥ श्रेष्ठे ॥

वृन्दावनम् । न० स्वनामप्रसिद्धे तीर्थविशेषे ॥ वृन्दावने किशलयासु मामाश्रितदेवता । भूतेशीभैरव सर्वसत्त्वसिद्धिप्रदायकः ॥ हृष्यागमः ॥ वृन्दावनतपस्तेपे तत् वृन्दावनं स्मृतम् । वृन्दया यत्र क्रीडारीतिस्सुविस्तरम ॥ इति पुराणम् ॥ वृन्दावनम् ॥

वृन्दावनेश्वरः । पुं० श्रीकृष्णे ॥

वृन्दावनेश्वरी । स्त्री० राधायाम् ॥

वृन्दिष्ठः । त्रि० अतिवृन्दारके ॥ अयमेषामतिशयेन वृन्दारकः । इष्ठन् । प्रियस्थिरेति साधुः ॥

वृन्दीयान् । त्रि० वृन्दारकतरे ॥ अयमनयोरतिशयेन वृन्दारकः । ईयसुन् । प्रियस्थिरेति वृन्दारकस्य वृन्दादेशः ॥

वृशः । पुं० आर्द्रके ॥ मूषे ॥ वृशोति ॥ वृश० । जनिदेच्यादिना क ॥ उन्दुरौ ॥

वृशा । स्त्री० ओषधीविशेषे ॥

वृश्चिकः । पुं० अलौ । द्रुणे । बिच्छू० द्र० भा० प्र० ॥ वृश्चिकविषस्य लक्षणं

धर्मार्थाचाकृतिरस्य । वृषशब्दस्यार्थे । आकृतिराकारः शरीरम् । वृषार्थधर्मार्थाकृतिः शरीरमस्येति ॥

वृषाङ्कः । पुं० शङ्करे ॥ साधौ ॥ वृषः चरश्चिह्नमस्य ॥ भल्लातके ॥ मधुके ॥

वृषाञ्जनः । पुं० डमरुवाद्ये ॥ इ० श० र० सौ ॥

वृषाश्वगः । पुं० शिवे ॥ इ० चि० प ॥

वृषाणकः । पुं० महाकाले । इ० चि० प ॥

वृषाधिपः । पुं० शक्रमठे ॥ वृषस्य राशिविशेषस्याधिपः ॥

वृषान्तकः । पुं० जनार्दने ॥ विष्णौ ॥

वृषायणः । पुं० चटके ॥ इ० हा० सौ० ॥

वृषासनः । पुं० शिवे ॥ वृषोवलीवर्द्दः आसनंयस्य ॥ उपरूपणासने ।

वृषाहारः । पुं० विडाले ॥ वृषीम् पिकमाहारोऽस्य । इ० हा० सौ० ।

वृषी । पुं० मयूरे ॥ इ०श०मा० ॥

वृषी । स्त्री० यतीनामासने ॥ व्रतिपिष्टरे ॥ वर्षतिसुखम् । वृषु० । इगुपधेतिकः । गौरादिः ॥

वृषोत्सर्गः । पुं० श्राद्धादौवत्सतरी



चतुष्टयसहितत्रिशूलचक्राङ्कितवृषत्यागे ॥

वृष्टः । त्रि० सिक्ते ॥ वृषेः क्तः ॥

वृष्टिः । स्त्री० वर्षे । मेघाज्जलपतने । वर्षणे । वर्षणम् । वृषु० । स्त्रियांक्तिन् ॥ भाग्याख्यायाम् तुष्टौ ॥

वृष्टिनी । स्त्री० शृङ्गपर्णिकायाम् । सूक्ष्मैलायाम् ॥ त्रि० वृष्टिनाशके ।

वृष्टिजीवनः । पुं० देवमातृकेदेशे । वृष्टिर्जीवनं यस्य ॥ वृष्ट्याजीवनं यत्र वा ॥

वृष्टिप्रमाणम् । न० मेघाज्जलपतनेयत्तायाम् ॥ यथा । द्रोणोपलनिमित्तंगर्भे० चौख्याढकानिपतनमेव । पञ्चयुतानवाश्मैः स्तमितेनभाद्रगप्रसवः ॥ इतिवराहोक्तौवृष्टेराढकद्रोणप्रमाणपरिज्ञानंतराश्चयोथ । आढकाश्चतुरोद्रोणमर्यादिद्यात्प्रमाणम् । धनुःप्रमाणमेदिन्योविद्याद्द्रोणाभिवर्षणम् ॥ स्तनेविंशाङ्गुलानाहेऽद्विचतुष्काङ्गुलोच्छ्रिते । भाण्डे वर्षतिसम्पूर्णे० ज्ञेयमाढकवर्षणम् ॥ तथाचाचार्यः । हस्तविशालंकुण्डकमधिकृत्याम्बुप्रमाणनिर्देशः । पञ्चाशत्पलमाढकमनेनमिनुयाज्जलंपतितमिति ॥

वृष्टिभूः । पुं० भेके ॥ वृष्टौभवति ।

क्षति । पञ्जिपूरीक्ष्ये।निष्कृतिग्रः । अजेनी ॥

वेणुकम् । न० तीर्थे । गजस्यतोदनदण्डे । वेणुनानिर्वृत्तम् । निर्वृत्ते अक्षद्यूतादिभ्यइतिठक् । इसुसुक्तान्तात्कः । सप्तापूर्वकस्यानन्वयि ॥

वेणुकर्करः । पुं० करीरवृक्षे ॥

वेणुजः । पुं० वेणुयवे ॥

वेणुदारी । पुं० नरकात्मजे बाणासुरात्मजे ॥

वेणुध्मः । पुं० वैणविके । वंशीवादके ॥ वेणुं धमति । ध्मा० आतोऽनुपसर्गे कः ॥

वेणुपत्री । स्त्री० वंशपत्रीतृणे ॥

वेणुयवः । पुं० वंशतण्डुले । वंशयवे ॥

वेणुवादः । पुं० वैणिके ॥

वेणुबीजम् । न० वंशयवे ॥

वेण्वा । स्त्री० तीर्थविशेषे ।

वेण्वासङ्गमः । पुं० तीर्थविशेषे ॥

वेतः । पुं० वेत्रे । द्रु० रा० नि० ।

वेतनम् । न० कर्मकरस्य भृतौ । कर्मण्यायाम् । विधायाम् । भृत्यायाम् । निर्वेशे । भासकराद्य० द्रु० भा० । जीवनोपाये । आजीवे ॥ रूप्ये ॥ वीयतेऽनेन । वीगत्यादौ । वीपतिभ्यां तनन् ॥

वेतसः । पुं० लताविशेषे । रथे । अभ्रपुष्पे । विदुले । शीते । वानीरे । वञ्जुले । वेत० द्रु० भा० ॥ अत्रभावप्रकाशः । वेतसोविदुलोनम्रोवञ्जुलोदीर्घपत्रकः । नादेयोगन्धपत्रश्च जलौकासम्भृतस्तथा ॥ नदीकूलप्रियस्तन्वः सुशीतोघनपुष्पकः । अश्मभारस्तोयकामोविदुखोजलवेतसः ॥ वेतसः शीतलोदाहशोथार्शोयोनिरुग्व्रणान् । हन्तिवीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् ॥ अयनम् । वृञ्० । नपुंसकइति सः । वाविकल्पस्य० इतञ्चान्ते० अति । पोषणकर्मणि । आतोऽनुपेति कः ॥ वञा । जयती । वेञ् । वेञस्तट्च्यसच् । वाकुलकादास्वंन ॥

वेतसाम्लः । पुं० अम्लवेतसे ॥

वेतसी । स्त्री० वेतसे ॥

वेतसीका । स्त्री० तीर्थविशेषे ॥

वेतस्वान् । त्रि० बहुवेतसदेशे ॥ वेतसाः सन्त्यत्र । कुमुदनडवेतसेभ्यो ड्मतुप् । मादुपधायाश्चेति वः ।

वेतालः । पुं० द्वारपाले ॥ भूताधिष्ठितशवे ॥ अकस्मात्मभक्षाभासमानेभूतविशेषे ॥ शिवगणाधिपविशेषे ॥

वेत्ता । त्रि० वेदितरि । ज्ञातरि ॥ वेत्ति । विद्० । तृच् ॥

वेत्रः । पुं० वेते । योगिदण्डे । सुदण्डे ॥ वीयते । वीगत्यादिषु । गुधशीपचिवचीत्यादिना० त्रः ॥ वं

तान् । प्रभुर्निवचसानृप्राज्ञोयाष्ट्‌माषेयापिनार्चयेत् ॥ श्रुतहीनमधीतंयज्ञेह्नामुत्तरभवेत् । श्रुतन्तुकेवलमपिसमुद्धारायकल्पते । योधीतेनार्थंतत्त्वज्ञस्तस्यसद्धारयाशया । भारवाहीसभूतस्य:केवलंकौशभाग्भवेत् ॥ तस्मादर्थंपरिज्ञानेयत्न:कार्योविजानता । ज्ञानंकर्मचसंयुसंयुक्तार्थंकथितंमया ॥ अधीतंश्रुतसंयुक्तंतयासिद्धंनकेवलम् । अधीत्ययत्किञ्चिदपितदर्थमवबुध्यच । स्वर्गेलोकमवाप्नोतिधर्मानुष्ठानविद्द्विज : इति । अपिच । वेदार्थज्ञोजपंजप्त्वातथैवाध्ययनंद्विज : । सुर्वमृक्षगमवाप्नोतिनरकन्तुविपर्यये-इतिव्यास : ॥ मनु : । वेदशास्त्रार्थंतत्त्वज्ञोयत्रतत्राश्रमेवसेत् । इहैवलोकेतिष्ठन्सब्रह्मलोकायकल्पते इति ॥ व्यास : । समुचितंखोधमपिस्तुताधीतंविधियते । चतुर्थमपिवेदानांकेवलाध्ययनाद्द्विजा : ॥ अन्वेवायन्यिन : श्रेष्ठाग्रन्थिभ्योधारिणोवरा : । धारिभ्यस्तार्थंतत्त्वज्ञास्तेभ्योप्यध्यात्मचिन्तका : ॥ पुस्तकेवेदलिखननिषेध : पाद्मोत्तरखण्डे ११० ऽध्यायेयथा । वेदस्यलिखनंकृत्वाय : पठेद्ब्रह्महाभवेत् । पुस्तकंचगृहेस्थाप्यवज्रपातोभवेद्ध्रुवमिति ॥ विदन्त्यनेनधर्मम् । विद्ज्ञाने । हलश्चेतिघञ् ॥ वेदार्थवेदनहेतुत्वाद्दारकारणे ॥ व्याकरणेनहिपदादिविभागशश्च्वान्वेदादयेज्ञायन्ते ॥ अनुभवे । भावेघञ् ॥ वृत्तौ ॥ केशवे ॥ इन्द्रियादिदेवताप्रकाशके । मौनशरीरावच्छेदेनभगवदर्चमितिन्यायशास्त्रम् ॥

वेदगर्भ : । पुं॰ अजयोनौ । ब्रह्मणि ॥ ब्राह्मणे । वेदोगर्भेयस्यस : ॥

वेदगर्भा । स्त्री॰ दुर्गायाम् । वेदजननिव्याम् ॥ अलमक्षतीभूतस्यमिश्रस्तिमेतदर्थे दक्ष्याहिश्रुते : । अतैवाच्यापराशक्तिर्वेदसंज्ञापुरातनी । ऋग्यजु : सामरूपेणसर्गादौसंप्रवर्तते इतिकूर्मपुराणे द्वादशाध्यायेश्रीभगवच्छ्लोक । तथाचचत्वारोवेदा : साङ्गा : सरहस्याबहुधाभिन्ना : । एकशतमध्वर्युशाखा : । सहस्रवर्त्मा सामवेद : । एकविंशतिधाबाह्वृच्यम् । नवधाथर्वणोवेदइतिमहाभाष्यम् ॥

वेदज्ञ । त्रि॰ वेदपारगे । वेदंजानाति । ज्ञा॰ । आतोनुपसर्गेइतिक : ॥

वेदनम् । न॰ अनुभूतौ । संवेदने । विद्ज्ञाने । ल्युट् चेति-ल्युटिक्लीवत्वम् ॥ विवाहे ॥

वेदना । स्त्री॰ ज्ञाने । दु : खे । पीडायाम् ॥ विद्वेदनाख्याननिवासेषुचुरादि : । ण्यासेतियुच् । अ

दृ। विदज्ञाने। चट्टिवन्दिविदिभ्यश्चेतिशाच्यमितियुच्॥

वेदनास्कन्धः। पुं० विषयज्ञानप्रपञ्चे। विज्ञानस्कन्धजन्ययोः सुखदुःखयोः। याप्रियाप्रियानुभयविषयस्पर्शे सुखदुःखतद्रहितविशेषावस्थाचित्तस्य जायते। सवेदनास्कन्धइतिवाचस्पतिः। सुखादिप्रत्ययोवेदनास्कन्धइत्यानन्दगिरिः॥

वेदनिन्दकः। पुं० नास्तिके। वेदनिन्दाकरे। वेदंनिन्दति। णिदिकुत्सायाम्। ण्वुल्॥

वेदपारगः। पुं० मन्त्रब्राह्मणात्मकसाङ्गवेदाध्यायिनि॥ त्रि० अवगतवेदार्थतत्त्वे। ज्ञानिनि। सन्न्यासिनि॥ वेदस्यपारंगच्छति। गम् ड०। अन्तात्यन्तेतिगमेर्डः॥

वेदभागः। पुं० मन्त्रब्राह्मणयोः॥ पूर्वंतदाहतेस्तुत्यादिषु। तेयथा। हेतुर्निर्वचनंनिन्दाप्रशंसासंशयोविधिः। परकृतिः पुराकल्पोव्यवधारणकल्पनेतिदशेत्यादयः॥

वेदमाता। स्त्री० गायत्र्याम्। सर्वेशाद्विजाः प्रोक्षनश्चानवेद्याः। उपासतेह्यादिदेवींगायत्रींवेदमातरम्॥ अपिच। योऽधीतेऽहन्यहन्येतांसाविश्रींवेदमातरम्। विज्ञायार्थंब्रह्मचारीसयातिपरमांगतिमिति। दुर्गायाम्॥

वेदमार्गः। पुं० वेदविधिविषये॥ यथा। जलौघैर्निरभिद्यन्तसेतवोवर्षतीश्वरे। पाखण्डिनामसद्वादैर्वेदमार्गाःकलौयथेतिश्री०। अपिच। एतस्माद्वेदमार्गाद्विषदन्यद्दिश्यते। तत्पुष्टद्रकर्मविरुद्धंयत्तीद्रंषौच विघ्नव्विंतमितिव०पु०॥

वेदवती। स्त्री० कुशध्वजराजकन्यायाम्। विवेकख्यप्रतीहार्याम्। वेदविद्याभिमानिन्यांदेवतायाम्॥

वेदवदनम्। न० व्याकरणे। यथा। योवेदवेदवदनंसदनंहिसम्यग्ब्राह्म्याः सवेदमपिवेदकिमन्यशास्त्रम्। यस्मादतः प्रथममेतदधीत्यधीमान्शास्त्रान्तरस्यभवतिश्रवणेऽधिकारीतिसिद्धान्तशिरोमणिः॥ योगिनोरन्तेप्रथमेवपाठः॥

वेदवादरतः। त्रि० वेदेयेसन्तिवादाः अर्थवादाः अक्षय्यंहवैचातुर्मास्ययाजिनः सुकृतंभवतीत्येवमादयस्तेष्वेवरतः। वेदार्थंसत्यार्थंनैवमेवैतदितिमिथ्याविश्वासेनसन्तुष्टे॥

वेदवासः। पुं० ब्राह्मणे। वेदस्यवासोयस्मिन्॥

वेदवित्। पुं० कर्मब्रह्मरूपवेदार्थविदि। कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकसर्ववेदार्थविदि॥ वेदज्ञ। ऋग्वेदादयोवेदाश्चत्वारस्तन्वानीतिवेदविद्वदति। वेदंवेदार्थं

सचन्द्रः ॥

वेदितः । त्रि॰ ख्यापिते

वेदितव्य : । त्रि॰ विदुरे । ज्ञातरि ॥ पु॰ ह॰ चन्द्रः ॥

वेदी । पुं॰ पण्डिते ॥

वेदी । स्त्री॰ सरस्वत्याम् । वेदिस्थ्यार्थे ॥

वेदीतीर्थम् । न॰ तीर्थविशेषे ॥

वेदीश : । पुं॰ द्रुहिणे । विधौ । ब्रह्मणि ॥

वेदोदय : । पुं॰ रवौ । सूर्ये ॥

वेदोदित : । त्रि॰ वेदोक्ते ॥

वेदोपकरणम् । न॰ शिक्षादिवेदाङ्गे ॥ वेदस्योपकरणम् ॥

वेद्धव्य : । त्रि॰ ताडयितव्ये ॥

वेद्य : । त्रि॰ वेदितव्यवस्तुनि । ज्ञेये । संविद्विषयभूते ॥ वेदितुं योग्य : । विदेर्ज्ञानार्थात्कर्मणि ण्यत् । सर्वैरिन्द्रियैरर्थैरर्थे । त्र्याणभगवान् शङ्कराचार्य्ये । नि : श्रेयसार्थिभिर्वेदमार्गेण्यादिवावृति ।

वेध : । पुं॰ व्यधे । वेधने ॥ वेधनम् । विधविधाने । घञ् ॥ वेपथौ । गभीरतायाम् । गहराः इति भाषाप्र॰ ॥

वेधक : । पुं॰ अम्लवेतसे । कर्पूरे । न॰ धान्याके । त्रि॰ वेधकर्त्तरि ॥

वेधनम् । न॰ वेधे । वींधना॰ इ॰ भा॰ ॥ विध॰ ल्युट् ॥ वेधसाधने ॥ विध्यतेऽनेन । करणे तिल्युट् ॥

वेधनिका । स्त्री॰ मणिकाष्ठादिविधनोपकरणे । आस्फोटन्याम् । भौंरी॰ वर्मी॰ इ॰ भा॰ । विध्यतेऽनया । विधविधाने । ल्युट् । स्वार्थे क : ॥

वेधमुख्य : । पुं॰ कर्पूरे । वेधिमुख्य: ॥

वेधमुख्यक : । पुं॰ कर्पूरके । द्राविडकी । काल्यके । स्वार्थेकन् ॥

वेधमुख्या । स्त्री॰ कस्तूर्याम् वेधिमुख्या ॥

वेधा: । पुं॰ परमेष्ठिनि । धातरि ॥ बुधे ॥ विष्णौ । हृषीकेशे ॥ रवौ ॥ सर्वे तार्क्ष्ये ॥ विदधाति । डुधाञ् । असुन् । विधाञोवेधपेतिविधाञे आऽसिप्रत्यय ॥ विधति । विधविधाने । असुन्वा ॥

वेधसम् । न॰ ब्रह्मतीर्थे । अङ्गुष्ठमूले । इ॰ श॰ चं॰ भा॰ ॥

वेधित: । छिद्रिते । विद्धे । विंधा॰ बींधा॰ इ॰ भा॰ ॥ वेध्यतेस्म । विध॰ ण्यन्तोऽनेकार्थ :

वेधी । पुं॰ अम्लवेतसे ॥ त्रि॰ वेधकर्त्तरि । वेधविशिष्टे ॥

वेधिनी । स्त्री॰ जलूकायाम् ॥ मेथिकायाम् ॥

वेध्यम् । न॰ लक्ष्ये । त्रि॰ वेध्ये ॥

वेन : । पुं॰ प्रजापतौ । नृपति ।

वेश्मनकुल : । पुं॰ गन्धमूषिके ॥

वेश्मभू : । स्त्री॰ गृहरचनार्हच्छिन्नभूमौ । वास्तुनि ॥ वेश्मनोभू : ॥

वेश्यम् । न॰ वेश्यालये ॥ वेशेभव : । दिगादित्वाद्यत् ॥

वेश्या । स्त्री॰ वारस्त्रियाम् । गणिकायाम् । रूपाजीवायाम् ॥ वेशेननेपथ्येनसम्पद्यते । कर्मवेशाद्यत् ॥ वेशेवेश्यागृहेभवावा । दिगादित्वाद्यत् ॥ वेश : प्रवेशोस्त्यस्यावा । अन्येभ्योपीतियत् ॥ पाठायाम् ॥

वेश्यागण : । पुं॰ वेश्याचारे । वेश्यासमूहे ॥

वेश्याचार्य : । पुं॰ पीठमर्दे ॥

वेश्याजनसमाश्रय : । पुं॰ गणिकागृहे । वेशे ॥ वेश्याजनस्यसमाश्रयोवासस्थानम् ॥

वेश्याश्रय : । पुं॰ वेशे ॥

वेष : । पुं॰ वेशे । प्रसाधने । वस्त्रालङ्काररचनादिकृतशोभायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । घञ् ।

वेषय : । पुं॰ कासमर्दे । पयोपस्करे ॥

वेषवा । स्त्री॰ वितुन्नके । धन्याके ॥

वेष्ट : । पुं॰ वेष्टने ॥ निर्यासे । श्रीवेष्टे । सरलद्रवे । वेष्टते । वेष्टवेष्टने । घञ् ॥

वेष्टक : । पुं॰ कूष्माण्डे । पुष्पफले ॥ प्राचीरे । वृतौ ॥ न॰ उष्णीषे ॥ निर्यासे । श्रीवेष्टे ॥ वि॰ वेष्टनयुक्ते संवेष्टके ॥

वेष्टनम् । न॰ कर्णशष्कुल्याम् ॥ उष्णीषे ॥ मुकुटे । वृतौ । गुग्गुलौ । व्याप्तसंवेष्टने । वेष्टन॰ लपेटन॰ कू॰ भा॰ प्र॰ ॥

वेष्टनक : । पुं॰ रतिबन्धविशेषे । यथा । जङ्घेयंपादमेकाञ्चभुजानारीवेष्टयेद्यदि । कामासक्ताप्रियंनारी भ्योवेष्टनक : स्मृत : ॥

वेष्टनवेष्टक : । पुं॰ रतिबन्धविशेषे ॥ यथा । बाहुपादद्वयेनाथभुजाभ्यां वेष्टयेद्यदि । कराभ्यांकण्ठमालिङ्ग्यवन्धोवेष्टनवेष्टक : ॥

वेष्टनिका । स्त्री॰ वेडमिकायाम् ॥

वेष्टवंश : । पुं॰ कण्टकिनि ॥

वेष्टसार : । पुं॰ श्रीवेष्टे ॥

वेष्टित : । वि॰ रुद्धे । संवीते । रुद्धे । आवृते ॥ न॰ लासके ॥ स्त्रीणांकरणान्तरे ॥ वेष्ट्यतेस्म । विवेष्टने । क्त : ॥

वेष्प : । पुं॰ जले । नीरे । पानीये ॥ विवेष्टि । विष्लृ॰ । पानीविषिभ्य : प : । उणादि प : ॥

वेष्य : । पुं॰ नटे । विविधाकृतिभिराकारैरावसम्पद्यते ॥

वेष्या । स्त्री॰ गणिकायाम् । विवेष्टि । विष्लृव्याप्तौ । अघ्न्यादित्वाद्यत् ॥

वेसनम् । न॰ चणकदालिचूर्णे, बेसन ॥

वेसर : । पुं॰ खच्चरे । अश्वतरे ॥

वेसवारः । पुं॰ व्यञ्जनादौसंस्कारार्थं दीयमानेहिङ्ग्वादौ । उपस्करे ॥ द्रव्याणिवेसवारस्यनागवल्लीदलानि हि । तण्डुलाश्चलवङ्गानिमरिचानि समासतः ॥ सर्वव्यञ्जनपरिमाणाया मु । हिङ्गुसैन्धवमरिचंजीरकंहरिद्राधा न्यकंतथा । क्रमेणद्विगुणंसर्ववेसवार मिमवदुः । लोकेनवारिणासर्वंव द्वितंवस्त्रगालितम् । माषयाव्यञ्जने देयकासमर्दंयतत्समृतम् ॥ वेसन म् । विसर्पेरणे । घञ् । वेसंपेरणं वारयति॰ वृणोतिवा । वृञ्॰ । कर्मण्यण् ॥

वेहत् । स्त्री॰गर्भोपघातिन्याम्गवि । विहन्तिगर्भम् । सम्पत्तुपदेहद्विम तिप्रत्ययेनसाधुः ॥

वेहारः । पुं॰ स्वनामख्यातेदेशविशे षे । यथा । वेहारेचैवमौहट्टे कौमा तिचकविके । अष्टादशभुजाकार्या माहेन्द्रेचहिमालये॰ इतिमन्त्रमुत्स र्गे ५॰ पटलः । महिषासुरमर्दि नीतिशेषः ॥

वै । अ॰ हेतौ । पादपूरणे । सम्बो धने । विशेषे । चारणार्थे । अनुन ये । प्रसिद्धौ । निश्चये ॥ वाति । वागतिगन्धनयोः । वीगत्यादौवा । डैः ॥

वैंशतिकः । त्रि॰ विंशत्याक्रीते ॥

वैकचम् । न॰ तिर्यग्वक्षोलम्बिमा ल्ये ।

वैकक्षकम् । न॰ उरस्युपवीतवत्ति र्यक्क्षिप्तमाल्ये । विशिष्टः कक्षो स्मात्॰ विकक्षमुरस्तत्रभवम् । तत्र भवइत्यण् । स्वार्थेकन् ॥

वैकङ्कतः । पुं॰ विकङ्कते । विकङ्क तस्यावयवोविकारोवा । पलाशादि त्वादञ् ॥

वैकटिकः । पुं॰ मणिकारे ॥

वैकर्णः । पुं॰ वात्स्ये । विकर्णस्या पत्यम् । विकर्णशुङ्गच्छगलाद्वत्सभ रद्वाजात्रिष्विति अण् ॥

वैकर्णेयः । पुं॰ काश्यपे । विकर्ण स्यापत्यम् । विकर्णकुषीतकात्का श्यपइतिढक् ॥

वैकल्पिकः । त्रि॰ विकल्पेनभवे ।

वैकल्यम् । न॰ विकलतायाम् । अ विवेके । विकलस्यभावः । ष्यञ् ।

वैकारिकः । पुं॰ देवानाङ्कारकोसा त्विकाहङ्कारे । देवतावर्गे । वस्व विशेषे । अपवन्यस्तेषां॰वैविकारा नैवभूतेन्द्रियाहङ्कारबुद्धिरूपान् ॰पु रुषबुद्ध्यापासते । तान् प्रतीदमुच्य ते॰दशमन्वन्तराणीहतिष्ठन्तीन्द्रिय चिन्तकाः । भौतिकास्तुशतंपूर्णं स हस्रन्त्वाभिमानिकाः । बौद्धादशस हस्राणितिष्ठन्तिविगतज्वराः । पुरु षनिर्गुणंप्राप्यकालसङ्ख्यानिवर्त्त ते । वैधव्यमीविदेहायेषांवैकृति

वैजयन्तीशब्दादिवैप्रतिकृतायिसि
कम् ।

वैजयन्ती । स्त्री० पताकायाम् ॥ ज
यन्तीपादपे ॥ अग्निमन्थे ॥ विज
यते । जिष्णुभिर्भवे । तृभुवनीतिमत्त् ।
विजयन्तस्येयम् । तस्येदमित्य-
ण् ॥ पञ्चवर्णमय्यां आजानुपर्यन्तल
म्बितायां मालायाम् ॥ यथोक्तं-
विष्णुपुराणे । पञ्चस्वरूपा या सा-
सा वैजयन्ती गदाभृतः । साभूतहे
तुसङ्घातभूतमाला च वै द्विजेति ॥
पञ्चस्वरूपा मुक्तामाणिक्यमरकतेन्द्र
नीलवज्रसमासवर्णा हरेर्वैजयन्त्या
ख्या माला । साभूतहेतूनां पञ्चतन्मा
त्राणां सङ्घातः पङ्क्तिः भूत-
माला च महाभूतपङ्क्तिरिति सूक्ष्म
स्थूलभूतमयीत्यर्थः ॥

वैजयिः । पुं० मनुर्नामकी ॥ विज
यस्यापत्यम् । इञ् ॥ जिनचक्रव
र्त्तिविशेषे । सचवर्ति ॥

वैजयिकः । त्रि० विजयस्य निमित्तं ।
विजयस्य निमित्तः संयोगः उत्पा
तो वा । तस्य निमित्तमिति ठञ् ॥

वैजवापः । पुं० गृह्यभेदे ॥

वैजिकः । पुं० सद्योऽङ्कुरे ॥ न० शि-
ग्रुतैले ॥ हेतौ । कारणे ॥ त्रि०
बीजसम्बद्धे ॥ प्रतिषिद्धमैथुनसङ्क
ल्पादिनाचैतत्कारेतोदोषजे पापे ॥

वैज्ञानिकः । त्रि० प्रवीणे । निपु
णे । शिक्षिते ॥ ख्यातसुखे । कुश
ले ॥ विज्ञानजनिते ॥ विज्ञानं बु-
द्धिः शिल्पमिनयुक्तः । तत्र नियु
क्त इति ठक् ॥ यद्वा । विज्ञानेन अथ
ति । तेन दीव्यति खनति जयति जि
तमिति ठक् ॥

वैडालः । त्रि० विडालसम्बन्धिनि ॥

वैडालव्रतम् । न० दुष्टाचारविशेषे ॥
यथा । यस्य धर्मध्वजो नित्यं शक्रध्व
ज इवोच्छ्रितः । प्रच्छन्नानि च पापा
नि वैडालं नाम तद्व्रतम् ॥

वैडालव्रतिकः । पुं० छद्मतापसे, स
र्वाभिसन्धिनि ॥ यथाह मनुः । ध
र्मध्वजी सदा लुब्धश्छाद्मिको लोकद
म्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः
सर्वाभिसन्धकः ॥ इति ॥ विडाल
व्रतेन चरतीति वैडालव्रतिकः । वि
डालो हि प्रायेण मूषिकादिहिंसाकाङ्क्ष
या ध्याननिष्ठ इव विनीतः सन्नव
तिष्ठत इत्युपचरितो यं शब्दः ॥

वैडालव्रती । पुं० भण्डतापसे ॥ वै
डालव्रतिनः पापाः सर्वधर्मवि
नाशकाः । सद्यः पतन्ति पापेषु
कर्मणस्तस्य तत्फलम् ॥

वैणवम् । न० वेणुफले ॥ वेणोः फ
लम् । बिल्वादिभ्यो विधिर्नाप्यो लु
क् ॥ त्रि० वेणोर्विकारे । दण्डादौ
॥ वेणोर्विकारः । पूर्ववदण् ॥ पुं०
रामे । तपनवनेवेणुदण्डे ॥

वैनतेयः । पुं॰ खगेश्वरे । गरुडे ॥ पक्षिणांमध्येगरुडोभगवद्विभूतिः । वैनतेयश्चपक्षिणामित्युक्तेः । विनतायाअपत्यम् । स्त्रीभ्योढक् ॥ अरुणे । सूरसूते ॥

वैनयिकः । पुं॰ शस्त्राभ्यासरथे । योग्यरथे ॥ गुणविशेषे ॥ यथा । लोकधीगुणशालिभ्योभातिवैनयिकोगुणः । यस्तुसद्यावहितलोकसुदुर्गुरतः शास्त्राद्वा॰समर्जित . सवैनयिकोभाति । समर्थ्यलोकेवैनयिकोमतोयःकृतनुचेष्टया । योमनीषायानुचेष्टयाशुभव्यापारेष्वाक्ष्मिस : सवैनयिकोविहव्यः ॥ त्रि॰ विनयान्विते । विनयादिभ्यष्ठगितिस्वार्थेठक् ॥

वैनाशिकः । पुं॰ बौद्धे । सर्वक्षणिकत्ववादिनिपुंसिवैनाशिके ॥

वैनाशिकः । त्रि॰ क्षयिके । परतन्त्रे । पराधीने ॥ बौद्धे । असद्वादिनि ॥ पुं॰ ऊर्णनाभे । न॰ नाशोन्मुखविशेषे । मिथुनतारायाम् ॥

वैणीतकः । पुं॰ न॰ परम्परावाहनी ॥ पीठपरम्परया॰यद्वाह्यं॰वहबीभूयानरास्तक्रहा॰शकटशिबिकादि यथा॰तद्वैणीतकम् । विणीतकानामिदम् । तस्येदमित्यण् ॥ यद्वा । विणीयएवैणीतकः । संज्ञायांकन् ॥

वैपरीत्यम् । न॰ व्यत्यासे । विपर्यासे । विपर्यये । व्यत्यये । दृ॰ वै॰ न्द्रः ॥ विपरीतस्य । भावः । ष्यञ् ॥

वैपरीत्यलज्जालुः । पुं॰ स्त्री॰ स्वल्पक्षुपहस्तफलायांलज्जालौ ॥ यथा । लज्जालुर्वैपरीत्यान्यास्वल्पक्षुपहस्तफला । वैपरीत्यापलज्जालुश्चाभिधानैप्रयोजयेत् । लज्जालुर्वैपरीत्याख्या : कटुरुष्णः : कफापहृत् । रसेनियामकश्चैवनानाविज्ञानकारकः ॥ इ॰रा॰नि॰ष्ट॰ ॥

वैवधिकः । त्रि॰ वार्त्तावहे । कांशिका॰ष॰भा॰प्र॰ ॥ विवधेन॰वीवधेन॰वा॰हरति । विभाषाविवधाद्विति पर्यठन् । एकदेशिनस्तथाऽनन्यत्वात्॰वीवधादपिठक् ॥

वैबोधिकः । पुं॰ वैतालिके । विबोधः प्रबोधनम् । प्रबोधनमितिठक् ॥

वैभवः । पुं॰ विभवस्वरूपे । न॰ ऐश्वर्ये ॥

वैभाजित्रम् । न॰ विभाजयितुर्धर्म्ये ॥ तस्यधर्म्यमित्यधिकारेविभाजयितुर्णिलोपश्चान्वक्तव्यइत्यञ्णिलोपश्च ॥

वैभ्राजम् । न॰ सुराणामुद्यानविशेषे ॥ विपुलाख्यस्याद्रेर्मूर्ध्नि॰वैभ्राजाख्यंनामवनमस्ति । यथा । वैभ्राजं वैपुलेमूर्ध्निसितोदस्यसरोत्तमः । देवैर्निषेव्यतेतत्र : कामश्चैरंशुमत प्रभैः ॥

याम् ॥ यथा । निदाघविधुराधीं दरीचारि शिरीषिका ॥

शिल : । पुं० न० कणिशाद्यर्जने । लूनक्षेत्रादशेषधान्ये । सम्पूर्णात्मकानेकधान्योञ्छने ॥ शिलति । शिल उञ्छे । कः घञ् वा । संज्ञापूर्वकत्वान्न गुणः ॥

शिलक : । पुं० वेदप्रसिद्धमुनिविशेषे ॥

शिलगर्भज : । पुं० पाषाणभेदनी ॥

शिलपट्ट : । पुं० देशविशेषे ॥ यथा । गर्भे प्रहरेत्समारभ्य सिंहादध्यक्षगामिने । शिलपट्टाभिधो देश : पर्वतेतिष्ठतिप्रिये ॥

शिला । स्त्री० पाषाणे । प्रस्तरे ॥ मनः शिलायाम् ॥ द्वाराधःस्थितदारुणि ॥ स्तम्भशीर्षे ॥ कर्पूरे । टाप् ॥

शिलाकर्णी । स्त्री० सल्लकीवृक्षे ॥

शिलाकुट्ट : ।
शिलाकुट्टक : । } पुं० पाषाणदारणे । टङ्के । शिलाकट इ० भा० प्र० ॥

शिलाजम् । न० शैलेये । लोहे ॥

शिलाजतु । न० पर्वतजातोपधातुविशेषे । शिलाजीत इ० भा० प्र० । तत्पर्यायादयो यथा । गैरेयमर्थ्यं गिरिजमश्मजञ्च शिलाजतु । शिलाह्वयी ॥ निदाघघर्मसन्तप्ता धातुसारधराधरा : । निर्यासवत्प्रमुञ्चन्ति तच्छिलाजतु कीर्तितम् ॥ सौवर्णं राजतं ताम्रमायसञ्च चतुर्विधम् । शिलाजत्वद्रिजतुपश्चात् लनिर्यासमप्यपि । यैरेयमश्मजञ्चापि गिरिजं शैलधातुजम् । शिलाजं कटु तिक्तोष्णं कटुपाकं रसायनम् । छेदि योगवहं श्लेष्ममेदोऽश्मशर्कराः । मूत्रकृच्छ्रक्षयश्वासवातार्शांसि च पाण्डुताम् । अपस्मारं तथोन्मादं शोथकुष्ठोदरक्रिमीन् ॥ सौवर्णन्तु जपापुष्पवर्णं भवति तद्रसात् । मधुरं कटु तिक्तोष्णं कटुपाकं रसायनम् ॥ छेदि योगवहं वर्णोत्करं पाण्डुरं राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च ॥ ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णञ्च जायते । लौहं जटायुपक्षाभं तत्तिक्तं लवणं भवेत् । विपाके कटु शीतञ्च सर्वश्रेष्ठमुदाहृतम् ॥ यच्छिलाधनप्रकारो भावप्रकाशादितोऽवसेय : ॥ शिलायाजातुव ॥ षष्ठीतत्पुरुष : ॥

शिलाघ्नी । स्त्री० कालाञ्जनीवृक्षे ॥

शिलाटक : । पुं० अट्टे । अट्टालके । विले । गर्ते । इ० मे० नी० शिलाट्योऽरितम् द्विरवैसचन्द्रे पाठ : ॥

शिलाटिका । स्त्री० रक्तपुनर्नवायाम् ॥

शिलात्मज : । पुं॰ लौहे ॥

शिलात्मिका । स्त्री॰ मूषायाम् ॥

शिलाद्द्रु : । पुं॰ शैलेये ॥ शिला जतुनि ॥

शिलाधातु : । पुं॰ सितोपले । ख ट्याम् । सेलखड़ी॰ इ॰ भा॰ ॥ स्वर्णगैरिके । सोनागेरु॰ इ॰ भा॰ प्र॰ ॥

शिलापट्ट : । पुं॰ पेषणार्थशिला याम् । सिलवट॰ भा॰ ॥

शिलापुत्र : । पुं॰ वर्षधात्रि । सिलब ट्टा॰ लोढ़ा॰ इ॰ भा॰ प्र॰ ॥

शिलापुष्पम् । न॰ शैलेये । कालपु ष्पे । शिलाजतुनि ॥

शिलाभवम् । न॰ शिलापुष्पे ॥

शिलाभेद : । पुं॰ पाषाणभेदनिवृ क्षे ॥ पाषाणभेदकाख्ये ॥

शिलारम्भा । स्त्री॰ काष्ठकदल्याम् ॥

शिलावल्का । स्त्री॰ औषधद्रव्यविशेषे । वल्कलायाम् । शैलगर्भायाम् । शिलावाक॰ इ॰ भा॰ प्र॰ ॥

शिलाव्याधि : । पुं॰ शिलाजतुनि ॥

शिलासनम् । न॰ शैलेये ॥ पाषाण रचितासने ॥

शिलासन्धि : । पुं॰ पर्वतगह्वरे । गुहायाम् ॥

शिलासारम् । न॰ लौहे ॥

शिलाह्वम् । न॰ शिलाजतुनि ॥

शिलि: पुं॰ भूर्जपत्रवृक्षे । स्त्री॰



द्वाराध : स्थितकाष्ठे ॥

शिलिन्द : । पुं॰ मत्स्यविशेषे ॥ य था । शिलिन्द : श्लेष्मलो बल्यो वि पाके मधुरो गुरु : । आमवातकरो हृद्यो वातपित्तहरो मत : । इ॰ रा॰ म॰ ॥

शिली । स्त्री॰ गण्डूपद्याम् । स्त म्भशीर्षे । द्वाराध : स्थितदारुणि ॥ शिलति । शिल॰ । इगुपध । तिक : । बाहीरस्त्रीति॰ ङीष् ॥

शिलीन्ध्र : । पुं॰ मत्स्यविशेषे । शिवफले ॥ यथा । शिलीन्ध्र : श्लेष्मलो बल्यो विपाके मधुरो गुरु : । वातपित्तहरो हृद्य आमवातकर श्च स : ॥ कदलीभेदे ॥ न॰ कवके । छत्राके । कदलीपुष्पे ॥ विषु टायाम् ॥

शिलीन्ध्रकम् । न॰ छिलीरे । गो मयच्छत्रिकायाम् ॥

शिलीन्ध्री । स्त्री॰ विहगीविशेषे ॥ गण्डूपद्याम् ॥ मृदि ॥

शिलीपद : । पुं॰ श्लीपदाभिधपाद रोगे । पादवल्मीके । गोद॰ इ॰ गौ॰ भा॰ प्र॰ । पीलुपाँव॰ इ॰ भा॰ ॥ कफप्रकोपनिदानं॰ सा मान्यलक्षणमाह । पुराणोदकभू यिष्ठा : सर्वर्तुषु च शीतला : । ये देशास्तेषु जायन्ते श्लीपदानि विशेष त : ॥ स ज्वरो वङ्क्षणोत्थ-

शिवारातिः । पुं॰ सारमेये ॥

शिवारुतम् । न॰ शृगालध्वनिनादे ॥

शिवालयः । पुं॰ हरमन्दिरे ॥ रक्ततुलस्याम् ॥ श्मशाने ॥

शिवालुः । पुं॰ शृगाले ॥

शिवास्मृतिः । स्त्री॰ जयन्तीवृक्षे ॥

शिवाह्लादः । पुं॰ बकवृक्षे ॥ शिवानन्दे ॥

शिवाह्वयः । पुं॰ पारदे त्रि॰ शिवनामके ॥

शिवाह्वा । स्त्री॰ रुद्रजटायाम् ॥

शिबिः । पुं॰ उशीनरदेशाधिपतौ भूपतिवरे । औशीनरे । उदारो यं महीपतिर्येन स्वमांसं श्येनाय दत्त्वा॰ शरणागतः कपोतोऽरक्षितः ॥ भूर्जपत्त्रवृक्षे ॥ व्याघ्रे । हिंस्रपशौ ॥

शिबिका । स्त्री॰ याप्ययाने । भाषा न॰ डोला॰ चौपाला॰ पालकी॰ इत्यादिभाषाप्रसिद्धे वस्तुविशेषे । शिबीरथे ॥ शिवेन । शिवं करोतीति शिवा । तत्करोतीति ण्यन्तात्॰ ण्वुल् ॥

शिबिरम् । न॰ युद्धवेश्मनि ॥ निवेशे । आगन्तुकसैन्यवसतौ ॥ सेनायामावासस्थाने ॥ राजनिवेशे ॥ अथ शिबिरलक्षणम् । श्रीभगवानुवाच । शिबिरं परिखायुक्तमुच्चैः प्राकारवेष्टितम् युक्तं द्वादशद्वाराट्टालसिंहद्वारपुरस्कृतम् ॥ युक्तं चित्रैर्विचित्रैश्च ध्वजैर्मेघवापाटकैः । निषिद्धद्वारद्वितं प्रसिद्धं सपुरस्कारम् ॥ सुलक्षणं चन्द्रवेधं प्राङ्गणस्तथैव चेति । विशेषोऽब्रह्मवैवर्ते द्रष्टव्यः कृष्णखण्डे १०२ अध्याये ॥ अश मृग्यच । अवगतौ । बाहुलकात् किरच्॰ अतत्वलस्य ॥ यद्वा । शेरते राजबलान्यस्मिन् । शीङ् स्वप्ने । बाहुलकात् किरच् । शीङोऽनुग्गन्सश्च ॥

शिवी । स्त्री॰ गौर्याम् ॥ पुंयोगे ङीष् ॥

शिवीरथः । पुं॰ शिबिकायाम् ॥ हृ॰ धात्री ॥

शिवेष्टः । पुं॰ बकवृक्षे ॥ त्रि॰ शिवप्रिये ।

शिवेष्टा । स्त्री॰ दूर्वायाम् ॥

शिशयिषुः । त्रि॰ शयितुमिच्छौ । शीङः सन्नन्तादुप्रत्ययः ॥

शिशिरः । पुं॰ हिमे । तुषारे ॥ शीतान्तरप्रसिद्धगिरिविशेषे ॥ पुं॰ न॰ ऋतुविशेषे । तपस्तपस्ययोः । माघफाल्गुनयोः । अस्मगे । शीते । हिमकूटे ॥ अस्यगुणा यथा । शिशिरः शीतलोऽतीवरूक्षो वातादिवर्धनः । अपिच । शिशिरं शीतलं तथ्यं शीतवातात्मकोपमिसि ॥ अवथा तस्य फलम् । मिष्टान्नं गौमधुरसपादीफलवपुवादियुक्तः सुधार्तः । क्रोधी सुधीरः कलीवरयवस्प्रसु

शीतकषाय: । पुं॰ हिमकषाये । यथा । द्व'सं'द्रव्यपलं'सम्यक्षड्भिर्नीरपलै : श्रुतम् । भवेद्रीसुग्धितं : स म्यादृषिम : शीतकषायकस्तद्विदो द्यम् ॥

शीतकोल : । पुं॰ हिमर्त्तौ । मार्गपौषयो: । हेमन्ते कूपोदकं वटच्छाया श्यामा स्त्रीइष्टकागृहम् । शीतकालेभवेदुष्णमुष्णकालेचशीतलम् । हेमन्तशिशिरर्तौ : ॥

शीतकिरण : । पुं॰ हिमांशौ । चन्द्रमसि ॥ यथा । कान्तेकोयमुदेतिशीतकिरणोजात : कुतोवारिधेरस्तेसुन्दरिसोदर : कथमहोदत्ता त्वदीयेस्तने । धन्यास्त्वंयुवतीसतीकुचयतीभातावियन्मस्तकद्वयं श्रीपरिहासकेलिकलयासुग्धीहरि : पातु व : ॥

शीतकुम्भ : । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजद्रव्यविशेषे । शिवशीतोच॰ इ॰ गौ॰ भा॰ प्र॰ । भला. पर्यायायथा । शीतलोशीतकुम्भीचकुम्भपुष्पाजलोद्भवेतिरत्नमाला ।

शीतकृच्छ्र : । पुं॰ व्रतविशेषे । यथा । त्र्यहंशीतंपिबेत्तोयंत्र्यहंशीतंपय : पिबेत् । त्र्यहंशीतंघृतंपीत्वावायुभक्ष्य : परंत्र्यहमितियमस्मृति : ॥

शीतघारम् । न॰ श्वेतटङ्कणे ॥

शीतगन्ध : । पुं॰ श्वेतचन्दने ।

शीतगु : । पुं॰ चन्द्रे ॥

शीतचम्पक : । पुं॰ आतपत्रे । सर्पणे ॥ हिमे ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ अर्कपुष्पिकायाम् । सूर्यवल्लयाम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गायाम् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ शाल्मलौ ॥ गुञ्जायाम् ॥ काकोल्याम् ॥

शीतपुष्प : । पुं॰ पर्कटके ॥ शिरीषे ॥ न॰ परिपेले ॥ शैलेये ॥

शीतपुष्पक : । पुं॰ पर्कटके ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ : । पुं॰ कर्पूरे ॥ त्रि॰ शीतलप्रभायुक्ते ॥

शीतप्रिय : । पुं॰ पर्पटे ॥ त्रि॰ शीतप्रीतियुक्ते ।

शीतफल : । पुं॰ उदुम्बरे ॥ भल्लातरे । पीलौ ॥ पीलौ ॥ शीतानिफलानियस्य ॥

शीतबला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु : । पुं॰ चन्द्रे ॥ शीताभानव : किरणायस्य : ॥

शीतभीत : । त्रि॰ शीतार्त्ते ।

शीतभीरु : । स्त्री॰ मल्लिकायाम् ॥ शीतात् भीरु : ॥ त्रि॰ शीतभीते ॥

शोचतिवा । शुच॰ । ऋज्रेन्द्राग्र्य त्यादिनारन् । निपातनात्कुचेस्य कः । पश्चाद्रेफस्य लः ॥

शुक्लाङ्गः । पुं॰ मयूरे ॥ शुक्लापाङ्गे ॥

शुक्लकण्ठः । पुं॰ दात्यूहे । त्रि॰ श्वेतगलयुक्ते ॥

शुक्लकन्दः । पुं॰ सहितकन्दे ॥ श्वेतमूले ॥

शुक्लकन्दा । स्त्री॰ अतिविषायाम् ॥

शुक्लकर्मा । त्रि॰ अकल्मषकर्मणि ॥

शुक्लकुष्ठम् । न॰ श्वेतकुष्ठे ॥

शुक्लक्ष्मम् । न॰ शुभाभ्रे ॥

शुक्लक्षीरा । स्त्री॰ काकोल्याम् ॥

शुक्लद्रुमः । पुं॰ शृङ्गाटके ॥

शुक्लधातुः । पुं॰ कठिन्याम् ॥ शुक्लश्चासौधातुश्च ॥

शुक्लपक्षः । पुं॰ सितपक्षे । विधुसम्बन्धिवर्धनानुकूलपक्षदशकलाक्रियाप्रपथे ॥ तत्पर्यायाः यथा । सितस्त्वापूर्यमाणः शुक्लः शिवः शुचिः शुक्लपक्ष कृष्ण-चौमपूर्णौ...पक्षौ...राद्रविशुक्लपक्षाख्यौ ॥ सतुशुक्लप्रतिपदादिपौर्णमास्यन्तपञ्चदशतिथ्यात्मकः । यथा । तत्रपक्षावुभौमासेशुक्लकृष्णौकमेणहि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पञ्चत्यायान्तुतिथयः क्रमात्पञ्चदशस्मृताः । दर्शान्ताः कृष्णपक्षेताः पूर्णिमान्ताश्शुक्लके ॥

शुक्लपुष्पः । पुं॰ छत्रकवृक्षे । मरिचक्षुपे । कुन्दपुष्पवृक्षे ॥ मरुवके ॥ त्रि॰ श्वेतकुसुमयुक्ते ।

शुक्लपुष्पा । स्त्री॰ नागदन्त्याम् ॥ शीतकुम्भ्याम् ॥

शुक्लपुष्पी । स्त्री॰ नागदन्त्याम् ॥

शुक्लपृष्ठः । पुं॰ शिशुमारे ।

शुक्लपृष्ठकः । पुं॰ सिन्धुवारे ॥

शुक्लपत्रः । पुं॰ जिनविशेषे ॥

शुक्लरोहितः । पुं॰ श्वेतरोहितवृक्षे ॥

शुक्लला । स्त्री॰ उच्चटायां ॥

शुक्लवर्णः । पुं॰ श्वेतवर्णसजातीयद्रव्ये । शुक्लगुणविशिष्टपदार्थे ॥

शुक्लवायसः । पुं॰ बके । दीर्घजङ्घे । बकोटे ॥

शुक्लशालः । पुं॰ षष्टिनिम्बे ॥ यू॰ ता॰ कट ॥

शुक्ला । स्त्री॰ शारदायाम् । सरस्वत्याम् । वाग्देवतायाम् ॥ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् । हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ राजिविशेषे । ज्ञानप्रकाशमयत्वादर्घि रादिगतौ । शास्त्रार्थत्वे नागमप्रसिद्धे देवयानमार्गे ॥ सुधाम् ॥ काकोल्याम् ॥

यथा । सरथाश्विनमाहापिशेष्य
तेसहि पातकात् । तेनशुद्धिमवा
प्याता देवीरुद्रतनौस्थितेति ॥ शुद्धि
स्त्रियांक्तिन् । देवतायैसुराप्रदानै
द्रव्यान्तरसंज्ञायाम् ॥ यथा । मांस
मीनमुद्राचफलमूलानियानिच ।
सुधादानेदेवतायैसर्वाण्यशुद्धिरी
रितेति ॥

शुद्धिलाभः । पुं॰ प्रायश्चित्ते ॥

शुद्धोदनः । पुं॰ नृपविशेषे ॥ शुद्धो
दनोऽस्य । अस्त्यादिः ॥ शुद्धो
दनीयसौमुक्ते न्यायवचः शुद्धौदन
म् ॥

शुद्धोदनसुतः । पुं॰ शाक्यमुनौ ॥

शुनः । पुं॰ श्वनि ॥ कुक्कुरे ॥ य
थाश्वाश्वयतिः । कुक्कुरस्तथा
हि । श्वानः कपिलोमकृष्णः । शु
नङ्गिरा ॥

शुनःशेपः । ) पुं॰ मुनिविशेषे । अ
शुनःशेफः । ) न॰
जीगर्त्तमुनिपुत्रे । आजीगर्त्तिः ॥

शुनकः । पुं॰ कुक्कुरे । शुनति ।
शुनगतौ । क्वुन्शिल्पिसंज्ञयोरपू
र्वस्यापि ॥

शुनश्चञ्चुपा । स्त्री॰ क्षुद्रचञ्चुपे ॥

शुनश्चिल्ली । स्त्री॰ शाकविशेषे । श्वा
नचिल्लिकायां ॥

शुनाशीरः । पुं॰ इन्द्रे ॥ शुनोवायुः
। शीरः सूर्यः । तावस्य स्तः ।
अर्शआद्यच् । अन्येषामपीतिदी
र्घः ॥ शुनाशीरोहितालव्यः सु
नासीरोदिदन्त्यकः । तालव्यादि
र्दन्त्यमध्यः शुनासीरः प्रशस्यते ।
इतिभरतः ॥

शुनासीरः । पुं॰ इन्द्रे । पुरुहूते ।
पुरन्दरे । शुनित्यव्ययस्य सुखार्थक
त्वात् । शोभनंनासीरंसेनाविशेषो
यस्य सः ॥ यद्वा । शुनोवायुः सी
रआदित्यः । शुनासीरावेति ।
देवताद्वन्द्वेचेत्यानङ् इतिदीर्घसमा
सः । इन्द्रदेवीयपाठोऽपमहत्वतः ॥

शुनासीरीयम् । न॰ शुनासीर्यं ॥
शुनासीरौदेवताऽस्येत्यर्थे॰ द्यावा
पृथिव्यादिनाछः ॥

शुनासीर्यम् । न॰ शुनासीरीयं॰ ह
विरादौ । शुनासीरौदेवताऽस्येत्य
र्थे॰ द्यावापृथिवीशुनासीरमरुत्व
दग्नीषोमवास्तोष्पतिगृहमेधाच्छच
ति॰ यत् ॥

शुनिः । पुं॰ कुक्कुरे । सारमेये ।

शुनी । स्त्री॰ कुक्कुरीम् । पश्चाच्च
श्वं शुनीसंज्ञम॰ । कुक्कुराङ्गनाम्
। गौरादित्वान्ङीप् ॥

शुनीरः । पुं॰ कुक्कुरीसमूहे । इति॰
त्रि॰ शेषः ॥

शुन्ध्युः । पुं॰ अग्नौ । शुन्धति । शु
न्धशुद्धौ । यजिमनिशुन्धिदसिज
निभ्योयुच् ॥

शेषावस्था । स्त्री० वालुङ्की ॥

शेषित: । त्रि० चर्विते ॥

शैक्ष: । पुं० प्रथमारब्धवेदे । प्राथमकल्पिके ॥ शिक्षामधीते । तद्वेत्ति वा इत्यण् ॥ शिक्षायामधम्० तत्र भवोऽस ॥ यद्वा । शिक्षांशमर्ति । शैक्षत्वण् ॥ यद्वा । शिक्षाशीलमस्य । छत्रादिभ्योण् ॥

शैख: । पुं० सङ्कीर्णजातिविशेषे । । भूर्जकण्टके ॥

शैखरिक: । पुं० अपामार्गे ॥ शिखरेप्रायेणभवति । अध्यात्मादित्वाट्ठञ् ॥

शैखरेय: । पुं० अपामार्गे ॥

शैत्यम् । न० शीतत्वे ॥ भावेष्यञ् ॥ शैत्यं हि यत्सा प्रकृतिर्जलस्य ॥

शैथिल्यम् । न० शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥

शैनेय: । पुं० शिनेर्नप्तरि । सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्यम् । शुभ्रादित्वाड्ढक् ॥

शैर्षच्छेदिक: । त्रि० शीर्षच्छेद्ये ॥ शिरश्छेदंनित्यमर्हति । शीर्षच्छेदाद्यच्चेतिठञ् । प्रत्ययेयोगेनशिरस: शीर्षभावश्च ॥

शैल: । पुं० महीध्रे । पर्वते । शिलोच्चये ॥ प्रचुरा: शिला: सन्त्यत्र । ज्योत्स्नादित्वादण् ॥ न० शैलेये । तार्क्ष्यशैले । रसाञ्जने ॥ शिलाजतुनि ॥

शैलकम् । न० शैलजे ॥

शैलगन्धम् । न० शावरचन्दने ।

शैलगर्भा । स्त्री० शिलावल्कायाम् ॥

शैलगर्भाह्वा । स्त्री० शिलावल्कायाम् । इ० रा० नि० वट: ।

शैलजम् । न० शैलेये । सुगन्धिद्रव्यविशेषे ॥ शैलेयाख्यम् । अमी० । सप्तम्यांजनेर्ड: । त्रि० पर्वतोद्भववस्तुनि ॥

शैलजा । स्त्री० गिरिजायाम् । पार्वत्याम् ॥ शैलाज्जाता । अमी० । पञ्चम्यामिति ड: ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥

शैलधन्वा । पुं० शम्भौ । शिवे ॥ पु० त्रि० शैव: ॥

शैलधर: । पुं० गिरिधरे । श्रीकृष्णे ॥ द्युतिधनञ्जय: ॥

शैलधातुजम् । न० शिलाजतुनि ॥

शैलनिर्यास: । पुं० अश्मजे । शिलाजतुनि ॥ शैलस्यनिर्यासइव ॥

शैलपत्र: । पुं० विल्ववृक्षे ॥

शैलपीलु: । पुं० अक्षोटे ॥

शैलभित्ति: । स्त्री० टङ्के ॥

शैलराज: । पुं० शैलपतौ ॥ हिमालये ॥ शैलानांराजा । टच् ॥

शैलराजतनया । स्त्री० पार्वत्याम् ॥

शैलराजसुता । स्त्री० पार्वत्याम् ।

दुर्गायाम् ॥ यथा । “अरूपापरभावत्वाद्रूपाक्रियात्मिका । जाता शैलेन्द्रगेहे सा शैलराजसुतात-त: ॥” इति देवीपुराणे ४५ अ० ॥

शैलवल्कला । स्त्री० शिलावल्कलायाम् ॥

शैलबीज: । पुं० भल्लातकवृक्षे ॥

शैलशिबिरम् । न० वार्द्धौ । घरघोम्रवे । समुद्रे ॥

शैलसुता । स्त्री० अम्बिकायाम् । पार्वत्याम् ॥ ज्योतिष्मत्याम् ॥

शैलाख्यम् । न० शैलजे ॥

शैलाग्रम् । न० शिखरे । शैलशृङ्गे ॥

शैलाटम् । न० शैलेये । इ० रा० टः ॥

शैलाट: । पुं० देवले ॥ सिंहे ॥ श्वेतकाचे । किराते ॥ इ० मे० टर: ॥

शैलादि: । पुं० नन्दिनि । शिवगणविशेषे ॥

शैलापगा । स्त्री० क्षुद्रनद्याम् ॥

शैलाली । पुं० नटे ॥ शिलालिना प्रोक्तं नटसूत्रमधीते । पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोरिति णिनि: ॥

शैलिक्य: । पुं० सर्वलिङ्गिनि ॥ शिलिक्यस्य भाव: कर्म वा ष्यञ् ॥

शैली । स्त्री० सद्वृत्ते ॥ प्रवृत्ति: परिभाषायां शीलसङ्केतसमयकारा-येतिचित्कायां शेष: ॥ समवधानपूर्विकायां प्रवृत्तौ ॥ यथाम्नायै: सम्प्रदायाम्नायमेध्यन्ते ऋषिभि: सर्वे ऋषियाद्वृत ॥ शीलभवा । अण् ङीप् ॥

शैलूष: । पुं० बिल्वे । मालूरवृक्षे ॥ नटे ॥ शिलूषस्यापत्यम् । अण् । शैलूषवेति० नामरूपत्वात् ॥

शैलूषिक: । पुं० नटवृत्त्यै जीविनि ॥

शैलूषिकी । स्त्री० शैलूषिकजातिस्त्रियाम् ॥

शैलेन्द्र: । पुं० हिमाचले ॥

शैलेन्द्रस्थ: । पुं० भूर्जवृक्षे ॥

शैलेय: । पुं० मधुपे । भ्रमरे । सिंहे । न० तालपर्ण्याम् । सैन्धवे । शैलजे शैलजातगन्धद्रव्ये । छरीला० इ० भा० प्र० ॥ तत्पर्यायाद् यथा । शैलेयन्तु शिलापुष्पं वृद्धकालानुसार्यकम् । शैलेयं शीतलं हृद्यं कफपित्तहरं लघु । कण्डूकुष्ठाश्मरीदाहविषहृद्रक्तहृदिति ॥ त्रि० शिलातुल्ये ॥ शिलाया मुत्पन्ने ॥ शिलायां भव: । नद्यादिभ्यो ढक् ॥ शिलेय । शिलायाद्वसिंशाशिभामेनटञ्धा । ढोपिशैलेयो ॥

शैलेयी । स्त्री० पार्वत्याम् ॥

कुलतायाम् । इष्टवियोगानुचिन्तने । इष्टवियोगनिमित्ते मनसः सन्तापे । इष्टवियोगतज्ञाभावज-ताज्ञाने ॥ सखानुचिताएव• यतः । शोचमानास्तु सस्नेहा बान्धवाः सुहृदस्तथा । पातयन्ति गतं स्वर्गाद् अश्रुपातेन राघव ॥ भूरिद्युम्नो गतः स्वर्गं पुण्यैर्न पतितः पुनः । शोचितो बन्धुवर्गेण सतीस्नेहैः परिप्लुतः ॥ इति वह्निपुराणे रामं प्रति वशिष्ठोक्तिः ॥ विवेकिनां चित्ते तु नास्त्येव शोकावकाशः । यतः । पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्राम्यतां मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव । संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां यदा सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ॥ शोचनम् । शुच शोके । घञ् ॥ संसारे । स्वर्गस्थं पुरुषं शोचयतीति शोकस्तन्मूलः संसारः । तत्स्वरूपविचारणाद्गुरुभिः । शोकं तरति आत्मविदिति ॥

शोकनाशन: । पुं• अशोकवृक्षे ॥ शोकं नाशयति । नन्द्यादित्वाल्ल्युः ॥ परमात्मनि ॥ स्वाभेदसाक्षात्कारेण संसारिणां संसारशोकं नाशयति ॥

शोकहारी । पुं• वनबर्बरिकायाम् ॥

शोकातिग: । त्रि• मानसदुःखैर्विवर्जिते ॥ शोकमतीत्य गच्छतीति तथा ॥

शोकापनुद: । पुं• पुत्रे । शोकमपनुदति । नुद प्रेरणे । नुदन्ति शोकं शोकाः परिस्तजापनुदोरिति सुखमाहरणे क: ॥

शोकारि: । पुं• कदम्बवृक्षे ॥

शोकार्त्त: । त्रि• शोकाकुले ॥

शोचनम् । न• शुचि । शोके ॥ त्रि• शोकयोगे ॥ शोचति• तच्छील: । शुच शोके । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपद: । इति युच् ॥

शोचना । स्त्री• शोकोत्पादनायाम् ।

शोचनीय: । त्रि• शोच्ये । शोचितुं योग्ये । यथा । वेदान्तभावेन पठन्ति विद्यार्थिनो धनस्यापधनापहारा: । ते शोचनीया इह जीवलोके मनुष्यरूपेण मृगाश्चरन्तीति ॥

शोचिष्केश: । पुं• वह्नौ । अग्नौ । शोचींषि ज्वाला: केशा इवास्य । नित्यं समासेऽनुत्तरपदस्थस्येति षत्वम् । चित्रकवृक्षे ॥

शोचि: । न• रोचिषि । प्रभायाम् । शुच्यति• पूतीभवत्यनेन । शुचिरपूतीभावे । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसि: ॥

शोच्य: । त्रि• तपस्विनि । सापराधे ॥

ष्ट्रादित्वात्तृट् : । क्विव् वा आग मश्वाश्वस्थानित्यत्वान्नतुक् ॥
श्मश्रुमुखी । स्त्री० श्मश्रुयोषिति । पोटायाम् ॥
श्मश्रुल । त्रि० प्रवृद्धमुखरोमवति । सिध्मादित्वाल्लच् ॥
श्माशानिक : । पुं० पितृवनेपाठादिकर्त्तरि । मसाणिका० हू० भा० प्र० । श्मशानेऽधीते । षध्यायिन्य इत्यकारादित्ठक् ॥
श्यान : त्रि० शीतास्पृष्टघिते । सङ्कुचितमात्रे ॥ श्यायतेस्त्वं श्यैङ् गतौ । क्त : । संयोगादेरातोधातोर्यण्वत इतिनिष्ठानत्वम् ॥
श्याम । पुं० प्रयागस्थवटे । वारिदे । वृद्धदारके । पिके । कोकिले ॥ कृष्णवर्णे ॥ हरिवर्णे ॥ श्यामाके ॥ नीलवर्णे ॥ धत्तूरे ॥ दमनकवृक्षे ॥ गन्धतृणे ॥ न० मरिचे ॥ सिन्धुलवणे ॥ त्रि० कृष्णवर्णविशिष्टे ॥ हरिद्वर्णवति ॥ श्यायतेस्तैनीयस्मात् । श्यैङ् । इषियुधीन्धिदसिश्याधूसूभ्यो मगितिमक् ॥ पुं० । रूपमाद्रिजाति० तमालदलानिभे० चन्दनविशेषे ॥ श्रीकृष्णे ॥
श्यामक : । पुं० श्यामाके । सविक्ष्यतिभासाप्रतिर्तने । न० रोहिषतृणे ॥ श्यामं एवं म स्वार्थे । प्रा० । नमस्यक् । शकन्ध्वादिः ॥

श्यामकण्ठ : । पुं० मयूरे ॥ शिवे ॥ पक्षिविशेषे ॥
श्यामकन्दा । स्त्री० अतिविषायाम् ॥
श्यामकाण्डा । ) श्यामग्रन्थि : । ) स्त्री० गण्डदूर्वायाम् । गण्डाल्याम् । नीलमेचायाम् ॥
श्यामपत्र : । ) श्यामपत्रक : । ) पुं० तमालपादपे ॥
श्यामल : । पुं० पिप्पली । कृष्णे । श्यामे ॥ नीलमरकते । त्रि० कृष्णवर्णविशिष्टे । सिध्मादित्वाल्लच् ॥
श्यामलचूडा । स्त्री० गुञ्जायाम् ॥
श्यामलता । स्त्री० शारिवायामेवधौ ॥ श्यामलिनि ॥
श्यामला । स्त्री० पार्वत्याम् । कस्तूर्याम् ॥ पञ्चगन्धायाम् । जम्ब्वाम् ॥ कटभ्याम् ॥
श्यामलिका । स्त्री० नील्याम् ॥
श्यामवेष् : । पुं० कृष्णे वो ॥
श्यामवल्ल : । पुं० शिरीषे ॥
श्याममुन्दर : । पुं० श्रीकृष्णे ॥
श्यामशालि : । पुं० कृष्णशालौ ॥
श्यामा । स्त्री० कालिकायाम् । दुर्गायाम् । पार्वत्याम् ॥ श्यामायाउत्पत्तिर्यथा । तत : साकालिकारेवीयोगनिद्राजगन्मयी । पूर्वस्य कृष्णतीरूपाकन्याधंमेन्कायो ॥ समयस्यानुरूपेणमेककाठरेशिया

वार्त्तायाम् । अभ्यासे । षड्जादिस्वरारम्भकावयवशब्दविशेषे ॥ तदुक्तम् । प्रथमश्रवणाच्छब्द : श्रूयते ह्रस्वमात्रकः । सा श्रुति : सम्परिज्ञेया स्वरावयवलक्षणेति ॥ श्रवणे ॥ श्रूयते । स्त्रियां क्तिन्निति धर्मं विक्तिन् ॥ श्रूयते धर्मोऽनयेति वा । श्रुतजीविस्तुभ : करणक्तिति क्तिन् ॥

श्रुतिकट : । पुं॰ प्रायश्चित्ते ॥ सर्पे ॥ पापशोधने । प्रायश्चित्ते ॥ इ॰ मेदिनिहेमचन्द्रौ ॥

श्रुतिकटु : । पुं॰ कठोरवर्णे ॥

श्रुतिजीविका । स्त्री॰ स्मृतौ ॥

श्रुतितत्पर : । त्रि॰ वेदाभ्यासरते ॥ सकर्णे ॥

श्रुतिधर : । त्रि॰ श्रुतमात्रधारक्ते ॥ तद्दीपघृतं गारुडे यथा । हरिद्राञ्च । हस्तिकर्णस्त्वचेसंगृहीत्वा चूर्णयेद्धर । सर्वरोगविनिर्मुक्तं चूर्णं पलशतं विव ॥ सक्षीरं भक्षितं कुर्यात् षण्मासैरसंशयम् । नरं श्रुतिधरं शूरं मृगेन्द्रगतिविक्रमम् । पद्मगौरप्रतीकाशं युक्तं दशशतायुषा । षोडशाब्दाकृतिं विप्रसततदुग्धभोजितम् । मधुसर्पि : समायुक्तं जगधमायुष्करं भवेत् ॥ तक्रगर्धं मधुनासार्द्धं दग्धपर्ण सहस्त्रिणम् । कुर्यान्नरं श्रुतिधरं प्रसदाजनवल्लभ-

मिति ॥ १९१ अध्याय : ।

श्रुतिवर्ज्जित : । त्रि॰ वधिरे ॥ नास्तिके ॥ श्रुतिभ्यां॰ श्रुत्यावाभर्जित : ॥

श्रुतिवेध : । पुं॰ कर्णवेधे ॥

श्रुतिस्फोटा । स्त्री॰ कर्णस्फोटायाम् । त्रिपुटायांलतायाम् ॥

श्रुतोपनिषत्क : । त्रि॰ ज्ञानिनि ॥

श्रेढी । स्त्री॰ लोलावत्युक्ताङ्कविशेषे ॥

श्रेणि : । पुं॰ स्त्री॰ वीथ्याम् । पालौ । पङ्क्तौ ॥ समानशिल्पिसंहतौ । कारुसंहतौ । एकेन शिल्पेन पण्येन वा ये जीवन्ति॰ तेषां समूहे ॥ श्रयति॰ श्रीयतेवा । श्रिञ् । वह्निश्रीतिनि: ॥ एकसुष्वैसजातिसमूहे । सेवापाचे ॥

श्रेणिक : पुं॰ मगधदेशीयनृपतिविशेषे । इति हेमचन्द्र : ॥

श्रेणी । स्त्री॰ श्रेणिशब्दार्थे ॥

श्रेणीधर्म : । पुं॰ वणिगादीनांधर्मे ॥

श्रेय : । न॰ शुभे । निर्ध्याने । नि:श्रेयसे । वेदबोधितेपरमपुरुषार्थे । स्वरूपावस्थाने । अनपायिसुखावाप्तिलक्षणे । आगमप्रापितेहिते ॥ यथा । दृष्टैरनरवाव्याधेश्चिकित्सां नवारोतिय : । मत्वानिरौषधं देशं व्याधिस्थ : किं करिष्यति ॥ याय सिद्धतिदेशीयं ताक्तत्तत्त्वं समभ्यसेत् । सन्दीपिभवनेकोनुकूपं खनति पार्वे

ति । व्याधीयास्तं जराचायुर्याति भिन्नघटाम्बुवत् । निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समाचरेत् ॥ यावन्नाश्रयतेदुःखं यावन्नायान्ति चापदः । यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समाचरेत् ॥ कालोनत्राय्यते नानाकार्यैः संसारसम्भवैः । सुखदुःखैर्जनोहन्त न वेत्ति हितमात्मनः । इति कूर्मपुराणेपञ्चमोऽध्यायः ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितप्राणिनामभ्युदयनिःश्रेयससाधने० प्रवृत्तिनिवृत्तिलक्षणे । पुण्ये ॥ त्रि० अतिप्रशस्ते । शस्ते ॥ वृद्धमनयोरतिशयेनप्रशस्तम् । हितमनेनेतीयसुन् । प्रशस्यस्य श्रः । विद्याद्यधिके । धर्मार्थावुच्यतेश्रेयः । कामार्थौ० धर्म एव च । अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ पथ्यमुपदेशात्तुभूतसूनप्रतिबोध्यः ॥

श्रेयसी । स्त्री० करिपिप्पल्याम् ॥ अभयायाम् ॥ पाठायाम् । गजाम्बष्ठायाम् । श्रेष्ठायाम् ॥ उगित्वान्ङीप् ॥

श्रेयांसः । पुं० जिनार्हद्विशेषे ॥

श्रेष्ठः । पुं० कुबेरे । धनदे ॥ विप्रे ॥ नृपे ॥ मुख्यप्राणे ॥ न० गोदुग्धे । गव्ये ॥ त्रि० अग्र्ये । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेनप्रशस्यः । अतिशायनेतमबिष्ठनाविति इष्ठन् । प्रशस्यस्य श्रः ॥ प्रधानभूते ॥ ज्येष्ठे ॥ सद्दे ॥

श्रेष्ठकाष्ठः । पुं० शाकवृक्षे ॥

श्रेष्ठता । स्त्री० श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री० स्थलपद्मिन्याम् । उत्तमार्थानायाम् ॥ वृद्धगन्धे ॥

श्रेष्ठाम्लम् । न० वृक्षाम्ले ॥

श्रेष्ठी । पुं० कुलीनसमशिल्पिनि ।

श्रोणः । त्रि० खञ्जपादे । पङ्गौ ॥ श्रोणति । श्रोण् सङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । श्रु० । बाहुलकान्नः ॥

श्रोणिः । स्त्री० कट्याम् ॥ श्रोणति । श्रोण् ० । इन् ॥ यद्वा । श्रूयते पुंभिः । श्रु० । वह्निश्रियुद्रुग्लाहात्वरिभ्यो नित् इति निः ॥ पथि ।

श्रोणीफलम् । न० कटौ ॥

श्रोणीफलकम् । न० कटिपार्श्वे । कटे ॥ श्रोणिः फलकमिव० पर्य्याकारत्वात् ॥

श्रोणिबिम्बम् । न० कटिसूत्रे ॥

श्रोणिसूत्रम् । न० खड्गबन्धनसूत्रे । परतला० इ० भा० प्र० ॥

श्रोणी । स्त्री० कट्याम् ॥ पथि ॥ कृदिकारादक्तिन इति पक्षे ङीप् ॥

श्रोतव्यः । त्रि० श्रवणीये । श्रोतुं योग्ये । श्रोतव्यः श्रुतिवाक्येभ्यो म

श्रौतः स्मार्त्तोवर्णाश्रमात्मक इति मात्स्ये १२० अध्यायः ॥

श्रौतयज्ञः । पुं० अग्निहोत्रदर्शपौर्णमासादौ ॥ श्रुत्या प्रोक्तः श्रौतः । अण् । स चासौ यज्ञश्च ॥

श्रौतसंस्कृतिः । स्त्री० वेदोक्तसंस्क्रियायाम् । यथा । गृहस्थस्य क्रियाः सर्वाश्चागमोक्ताः कलौ शिवे । नान्यमार्गैः क्रियासिद्धिः कदापि गृहमेधिनाम् ॥ भैक्षुकेष्वाश्रमेष्वेवं वेदोक्तदण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञ यतस्तच्छ्रौतसंस्कृतिरिति म० नि० तन्त्रम् ॥

श्रौत्रम् । न० श्रोत्रियतायाम् । श्रोत्रियस्य कर्म भावो वा । युवादित्वादण्० श्रोत्रियस्य यलोपश्च । श्रोत्रायासम् इ ॥ भिन्नपाठः ॥

श्रौषट् । अ० देवहविर्दाने ॥ श्रूयतेऽनेन । श्रु० । बाहुलकात् डौषट् ॥

श्लक्ष्णः । त्रि० सूक्ष्मे । अल्पपर्य्याये च । स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु । स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ॥ इति ॥ मनोहरे ॥ सुखस्पर्शे । चिक्कणे । स्निग्धे ॥ श्लिष्यति० श्लिष्यतिया । श्लिष आलिङ्गने । श्लिषेरच्चोपधाया घूरितक्नः ॥

श्लक्ष्णकम् । न० पूगफले ॥

श्लक्ष्णत्वचायम् । न० गृहे । गृही ॥ श्लक्ष्णकत्वक्समृत्वचास्व० समुदाय ॥

श्लक्ष्णत्वक् । पुं० अश्मन्तकवृक्षे ॥ सुन्दरवल्कले ॥

श्लक्ष्णभूमिः । स्त्री० कृष्णमृदि ।

श्लथः । त्रि० शैथिल्याढ्ये । शिथिले ॥

श्लाघनम् । न० अभिनन्दने ॥

श्लाघा । स्त्री० अभिलाषे । स्पृहायाम् ॥ उपासने । परिचर्य्यायाम् ॥ प्रशंसायाम् । अविद्यमानगुणसम्बन्धज्ञापने ॥

श्लाघिष्ठः । त्रि० श्लाघ्यतमे ॥

श्लाघ्यः । त्रि० प्रशंस्ये । श्लाघनीये । स्तुत्ये ॥ आचार्य्ये ॥

श्लिकुः । पुं० सेवके । भृत्ये । श्लिष्यति० कार्यस्कार्य्ये लगतीत्याश्रयते । श्लिष आलिङ्गने । श्लिषेः कस्येति कुः ककारस्यादेशः ॥ पिङ्गे ॥ न० ज्योतिःशास्त्रे ॥

श्लिषा । स्त्री० आलिङ्गने ॥

श्लिष्टः । त्रि० सम्पृक्ते । गत्यर्थाऽकर्मकेति० श्लिषेः क्तः ॥ संयुक्त शब्दादौ । भिन्नार्थैकरूपान्वितवाक्ये ॥ तल्लक्षणं यथा । श्लिष्टमिष्टम् विस्पष्टमेकरूपान्वितं वचः इति ॥

श्लीपदम् । न० पादवल्मीके । पादवल्मीके ॥ अस्य निदानन्तु । यः सज्वरो वङ्क्षणयोर्भृशार्त्तिः शो

दानानि याजनाध्यापने तथा । प्रतिग्रहश्चैतैर्युक्तः षट्कर्मा विप्र उच्यत इति । अनुपोष्यवर्गे गृहस्थप्रकारे ॥ ऋतामृतायाचितमैक्षकृषिवाणिज्यकुसीदानि षट्कर्माण्यस्य ॥ न० पञ्चकर्मणां समाहारे । अध्यापनादिषट्सु कर्मसु ॥ यथा । अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मन इति ॥ शान्त्यादिषट्सु कर्मसु ॥ तानि यथा । शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने तथा । मारणान्तानि शंसन्ति षट्कर्माणि मनीषिण इति ॥ वि० षट्कर्मकर्त्तरि ॥

षट्काष्टकम् । न० विवाहादिविचारे दोषविशेषे ॥ यथा । यदि कन्याष्टमी भर्त्तुः षष्ठे च कन्यका । षट्काष्टकं विजानीयात्तद्वर्ज्यं समिद्वरैरपि ॥

षट्कूटा । स्त्री० भैरवीदेवताविशेषे ॥

षट्कोणम् । न० वज्रे ॥ षडस्रे । यन्त्रान्तर्गते ॥

षट्कोषः । पुं० न० षड्भ्यः कोषेभ्य उत्पन्ने वपुषि ॥ यथाहुः । पितृभ्यामशितादन्नात् षट्कोषं जायते वपुः । स्नायवोऽस्थीनि मज्जा च पितृतस्तथा । त्वङ्मांसशोणितमिति मातृतश्च भवन्ति हि ॥

षट्चक्रम् । न० शरीरस्थमूलाधाराद्यषट्प्रकारचक्रे ॥

षट्चरणः । पुं० भ्रमरे ॥ यूकायाम् ॥

षट्तिली । पुं० माघशुक्लैकादश्यामुपवासकृत्वा द्वादश्यां षट्तिलाचारविशिष्टे ॥ यथा । मृगशीर्षे च संप्राप्ते माघमासि प्रजापते । एकादश्यां सितपक्षे सोपवासो जितेन्द्रियः ॥ द्वादश्यां षट्तिलाचारं कृत्वा पापात्प्रमुच्यते । तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी ॥ तिलस्य दाता भोक्ता च षट्तिली नावसीदतीति ॥

षट्त्रिंशत् । स्त्री० संख्याविशेषे । छत्तीस० इ० भा० प्र० चि० । सङ्ख्येये ॥ यथा षट्त्रिंशदुपचाराः ॥

षट्त्रिंशत्तत्त्वम् । न० शैवशास्त्रप्रसिद्धे तत्त्वसमूहे ॥ यथा । प्राणापानसमानाश्चोदानव्यानौ च वायवः । भूतं च पञ्चभिः सार्द्धं चतुर्दशभिरिन्द्रियैः ॥ चतुर्विंशतितत्त्वानि सांख्यशास्त्रविदो विदुः । महान् कालः प्रधानश्च माया विद्या च पूरुषः ॥ कृतिपौराधिकाः प्रोक्तास्त्रिंशत्तत्त्वानि तैः सह । बिन्दुनादौ शक्तिशिवौ शान्तातीतौ परं ततः ॥ षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैरिति मानसोल्लासः ॥

षट्पदः । पुं० भ्रमरे ॥ षट् पदानि यस्य ॥ यूकायाम् ॥ न० मात्रा

स्यान्ते शेते । त्रि॰ सत्त्वयुक्ते । जन्तुसत्त्वविशाल. ॥ सत्त्वेनविशाल : ॥

सत्त्वसंशुद्धि : । स्त्री॰ अन्तः करणस्य निर्मलतायाम् । शब्दादिविषयापाकैभ्यः करणस्यासम्भावनाविपरीतभावनादिमलराहित्ये सत्त्वशुद्धि : संशुद्धि : सत्त्वसंशुद्धि : । तथा : सम्यक्भगवत्तत्त्वस्फूर्तियोग्यता ।

सत्त्वसङ्क्षय : । पुं॰ चित्तभङ्गे ॥ प्रारब्धकार्यासिद्ध्यादिविषादः सत्त्वसङ्क्षय : ॥

सत्त्वसमाविष्ट : । त्रि॰ सत्त्वेनचात्मना । आत्मविवेकज्ञानेनैतुमाविसर्गतीनातिशयेन॰ सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलराहित्येन॰ आसमन्तात्फलाव्यभिचारेण॰ आविष्टे व्याप्ते ।

सत्त्वसम्पन्न : । त्रि॰ सत्त्वापन्ने ।

सत्त्वस्थ : । त्रि॰ सत्त्वशीलप्रधाने ॥ पुं॰ विष्णौ ॥ सत्त्वं सत्त्वगुणं प्रकाशात्मकमधितिष्ठतिपालनीयाधितयाविष्णुरूपेणेतिसत्त्वस्थोविष्णु : । यदासत्त्वेपुंसः प्रापयुक्तोऽरूपेचान्यामिरूपेणचतिष्ठतीतिसत्त्वस्थ : । प्रा॰ । सुपिस्थः । तक : ॥

सत्पथम् । न॰ सर्वर्त्तिकायाम् ॥

सत्पथ : । पुं॰ वर्त्तितेऽध्वनि ॥ सं

शास्त्रोपन्याय । सम्भदृदितितत्पुरुष : । समासान्तश्च ॥

सत्पुत्र : । पुं॰ सत्पुत्रे ॥ सत्पुत्रे पत्नुजातेनवेदोविधिदिर्शयतो । पुत्रोयोनरकात्त्राता : सर्वैनसमङ्गलमा ॥

सत्पुरुष : । पुं॰ पञ्चमाश्वपुरुषे ॥

सत्प्रतिग्रह : । पुं॰ साधुजनदत्तद्रव्यग्रहणे ॥ सद्भ्य : साधुभ्य : प्रतिग्रहोदानग्रहणम् । यथा । समविनागमाधर्म्यादृयोगाभ : क्षियोजय : । प्रयोग : कर्मयोगश्चसत्प्रतिग्रहएवचेतिमनु : ॥

सत्प्रतिपक्ष : । पुं॰ तुल्यव्याप्तौ । प्रतियोगिनि । न्यायमते॰ साध्याभावसाधकं हेत्वन्तरं यस्य स हेतुः । यथा । शब्दोनित्य : श्रवणत्वात् शब्दवत् शब्दोऽनित्य : कार्यत्वाद् घटवदिति ॥ यथा । ह्रदो वह्निमान् धूमात्॰ इत्यादौ वह्न्यभावव्याप्यवद्ह्रदादिरिति ॥

सत्फल : । पुं॰ दाडिमवृक्षे ॥ शोभनफलयुक्तत्वात् ॥

सत्सङ्ग : । पुं॰ साधुसङ्गमे । सधर्मयतिजनसमागमे । यथोक्तं कुलार्णवे । सत्सङ्गश्चविवेकश्चनिर्मलं नयनद्वयम् । यस्यनास्तिनर : सोऽन्ध : कथंनस्यादमार्गगः ॥

सत्सार : । पुं॰ खादिरे । खदिरसा

ऋसिसर्वदाख्यायिनिहसिर्वा ॥

सद्वृत्तिभाक् । त्रि॰ सद्वृत्तिविशिष्टे । यथा । पथ्याशिनांशीलवतांनराणांसद्वृत्तिभाजांविजितेन्द्रियाणाम् । एवंविधानामिदमायुरन्त्यंसद्वाग्भट्टमुनिप्रवादः ॥

सधर्म्मचारिणी । स्त्री॰ सहधर्म्याम् ॥

सधर्म्मा । त्रि॰ तुल्ये ॥ समानोधर्मो यस्य स : ॥ धर्म्मादनिच्केवलात् ॥

सधर्म्मिणी । स्त्री॰ समानधर्म्मवला म्भार्य्यायाम् । पत्न्याम् ॥ सहधर्म्मोऽस्यस्याः ॰ कर्म्मसुपत्न्यासहा धिकारात् । धर्म्मशीलवर्णाश्राद्ये ति॰ इनि : । वोस्यजन्मकोतिपा स : ॥

सधर्म्मी । त्रि॰ समानधर्मोचारिणि ॥

सधवा । स्त्री॰ पतिवत्याम् ॥

सधि : । पुं॰ अग्नी ॥ सहधारणे । सहस्थितौ ॥ धाञ्'धि : । सहधि सधि : ॥

सधि : । पुं॰ हपभे ॥ सहती । घह॰ । सधीवस्तीसन् ॥

सधीची । स्त्री॰ सख्याम् ॥

सधीचीन : । त्रि॰ समीचीने ॥ विभाषाश्चे रिति॰ ख : । सहस्यसधि: ॥

सध्यञ्च् । त्रि॰ सहचरे । सहाञ्चति । ऋत्विगादिनाश्चे : क्विन् । सहस्यसधि : । अनद्विताभितिनिकारलोप ॥

सन : । पुं॰ घण्टापाटलिवृक्षे ॥ पुं॰ स्त्री॰ हस्तिकर्णास्फाले ॥ दाने । सनोतिषण्दाने । प॰ अच् ॥ त्रि॰ अखण्डिते ॥

सनक : । पुं॰ विधौ : पारिषद्भेदे । ब्रह्मण : सुते । मुनिविशेषे ॥

सनत् । अ॰ नित्यार्थे ॥

सनत् । पुं॰ ब्रह्मणि । हृदिणे ॥

सनत्कुमार : । पुं॰ वैदृयसंज्ञिताप्र चेतरिब्रह्मण : पुत्रे । वैधात्रे ॥ सनत्॰ नित्यंकुमार : ॥ यथा । सनत्॰ ब्रह्मासवकुमारोऽपरम् ॥ मन्त्रःसकारणमुक्तं हरिवंशे । यथैास्य ब्रह्मर्थं वार्ज्जकुमारप्रतिमिद्धिमाम् । तस्मात्सनत्कुमारेतिमम नामप्रतिष्ठितम् ॥ इति ॥ जिना भोदाद्यमतायंभौमान्तर्गतसार्वभौ मविशेषे ॥ न॰ उपपुरागविशेषे ॥

सनन्द : । पुं॰ सनन्दने । ब्रह्मण : पुत्रे । सयथा ॥ सनकश्चसनन्दश्च सनातनश्चात्मभु : । सनत्कुमारश्चमुनीन्निष्क्रियान्यूर्ध्वरेतस : ॥ अस्ययदि'सम्बन्ध : ३

सनन्दन : । पुं॰ ब्रह्मणश्चतुर्थे पुत्रे ॥ यथा । धर्म्मस्यभार्य्याऽहिंसाख्यातस्यांपुत्रचतुष्टयम् । सम्प्रापसुनि शार्दूलयोगशास्त्रविचारकम् ॥ ज्येष्ठ : सनत्कुमारोभूत॰ द्वितीयश्चसनातन : । तृतीय : सन

कोनामचतुर्थसनन्दनइति ॥ सनत्कुमारे ॥

सनपर्णी । स्त्री॰ अशनपर्ण्याम्

सना । अ॰ नित्ये ॥ सनति । षणसम्भक्तौ । आप्रत्ययः ॥

सनाखल: । पुं॰ सनखले ॥ यथा । महेन्द्रभीमविमलकुरुक्षेत्रगयाः खला: । सनामपदोत्तरा : साहशा : सनखला : खग ॥

सनात् । अ॰ नित्यार्थे ॥

सनातन: । पुं॰ अच्युते । विष्णौ ॥ शिवे ॥ ब्रह्मणि । ऋषिभि ॥ पितृणाम तिथौ ॥ दिव्यमनुष्ये । ब्रह्मणः पुत्रे । मुनिविशेषे ॥ परम्पराप्राप्ते॰ उपाधिपरिच्छेदेविवस्तुत : यस्मात्तत्स्वरूपत्वान्नित्ये॰ आत्मज्ञानंविनाछेत्तुमशक्येसंसाररूपे ॥ वि॰ स्थिरे । सुस्थिरे । सर्वदैकरूपे । अविनाशिनि ध्रुवे ॥ सनाभव : । सायश्चिरमितिष्ट्युट्युलौतुट्च ॥ अनादिपरम्परागते । चिरन्तने ॥

सनातनी । स्त्री॰ लक्ष्म्याम् ॥ सरस्वत्याम् ॥ दुर्गायाम् । भवान्याम् । निर्वचनन्तु । सर्वकालेसनाप्रोक्ता विद्यमानेसनातिच । सर्वश्चसर्वकालेषुविद्यमानासनातनीति ॥ अपिच । निर्गुणस्याचनित्यस्यवाचक: सनातन: । सदानित्यानिर्गुणा याकीर्त्तितासासनातनीति ॥ टि खान्द्वीप् ॥

सनत्कुमार: । पुं॰ ब्रह्मण : पुत्रे॰ सनत्कुमारे ॥ सनात्॰ नित्यंकुमार: ॥

सनाथ: । वि॰ सस्वामिके । नाथवति ॥

सनाथा । सनाथिका । स्त्री॰ पतिमत्याम् । जीवद्भर्त्तृकायाम् ॥

सनाभ: । पुं॰ सोदरभ्रातरि ॥

सनाभि: । पुं॰ ज्ञातौ । सपिण्डे ॥ सहोदरे ॥ समानोनाभिर्मूलपुरुषोऽस्य । ज्योतिर्जनपदेतिसमानस्य स : ॥ वि॰ तुल्ये । सदृशे ॥

सनामक: । पुं॰ शोभाञ्जने ॥ वि॰ समाननामवति ॥

सनि: । स्त्री॰ भक्तौ । दाने ॥ सनीति । यद्दाने । खनिकष्यज्यादिभ्य॰ इन् ॥ सनशब्दा ॥ अर्थेप याचायाम् । गुर्वादेः प्रार्थनयाकस्यचिदर्थस्यनियोजने ॥ यथा । देहामेन्मसाभिषेकंकुरु । अपिच । नाथेनाधकुलाचारसनीकुलवल्लभ । त्वत्पादाब्जोरुच्छायांदेहिमे॰ कृपानिधे॰ इति ॥

सनित: । वि॰ प्रतिपन्ने ॥

सनिष्ठीवम् । न॰ सष्ठीवप्रवचसि । सनिष्ठेवे । निष्ठेवनम् । ष्ठिवुनिरसने । घञ् । लघूपधगुण : । ए

घादरादित्वादीकार : । सन्निष्ठी वेन॰ श्लेष्मकणादिनिर्गमनेनवर्त्त तेइतिसन्निष्ठीवम् ॥ त्रि॰ सष्ठीव ॥

सन्निष्ठेवम्, । न॰ सश्लेष्मवचसि । अ स्फुक्कृति । निष्ठेवनम्॰ निष्ठेव : । त्रिवु॰ । घञ् । लघूपधगुण : । सहनिष्ठेवेनश्लेष्मकणादिनिर्गमेन वर्त्ततइतिसन्निष्ठेवम् ॥ अस्फुक्कृतं सनिष्ठेवमित्यमर : । त्रि॰ त इति ॥

सनी । स्त्री॰ सनिशब्दार्थे ॥

सनीड : । त्रि॰ निकटे । समीपे । उपकण्ठे ॥ समानं नीडं वासस्था नमस्य । सहनीडमितिवा ॥

सनुतर्, । अ॰ अन्तर्द्धाने ॥

सन्तत : । पुं॰ स्वरविशेषे । तल्लक्ष णंयथा । सप्तादिशादयादिशाद्वाद शादमथापिवा । सन्ध्याधीऽविस र्गौ आत्सन्तत : प्रनिगद्यतइति ॥ विकल्पोपातिकादिभेदात् । स न्ध्यामैरन्यथैव । अविसर्गीचपरि त्यागी ॥ न॰ सतते ॥ त्रि॰ त इति । व्याप्ते ॥ विस्तीर्णे ॥ सन्त न्यतेस्म । तनु॰ । क्त : । अनुदात्तो पदेशेतिनलोप : । समोवाहिततत योरितिपक्षे मलोपाभाव : ॥

सन्ततम् । अ॰ सातत्ये ॥

सन्तताभ्यास : । पुं॰ स्वाध्याये ॥

सन्तति : । स्त्री॰ गोत्रे । अभिजने । सन्ताने ॥ पङ्क्तौ । पुत्रपौत्रादीनां पारम्पर्ये ॥ विस्तारे ॥ तनये ॥ दुहितरि ॥ सन्तन्यते । तनोतेक्ति न्यांक्तिन् · पारम्पर्ये ॥

सन्तप्त : । त्रि॰ अध्वगमनादिनाश्रान्ते । तत्पर्यायोयथा । सन्तापितस्तुस न्तप्तोधूपितधूपायितौचदूनश्चेति ॥ सन्ताप्यतेस्म । तपसन्तापे । क्त : अकर्मकत्वात् कर्त्तरिवाक्त : ॥ प रितोद्विग्ने ॥ अग्नितापयुक्ते ॥

सन्तमसम् । न॰ विष्वगन्धुःन्ते । व्याप कान्धकारे ॥ समन्तात् सर्वत : ॥ तम : । अवसमन्धेभ्यस्तमसइत्यच् ॥

सन्तरणम् । न॰ तरणे । पारगमने । प्लवनपूर्वकदेशान्तरगमने ॥

सन्तर्दनम् । न॰ दृढसंग्रथे ॥

सन्तर्पणम् । न॰ प्रीणने । तृप्तौ ॥ द्राक्षादाडिमखर्जूरीकदलीशर्करा लाजाचूर्णमध्वाज्यसंमिश्रिते ॥ त्रि॰ तृप्तिकारके ।

सन्तर्पित : त्रि॰ सम्यक्प्रीणिते

सन्तान : पुं॰ सन्ततौ । विस्तारे ॥ गोत्रे । वंशे । अन्ववाये ॥ अप त्ये ॥ सन्तन्यते । तनुविस्तारे ॥ घञ् ॥ सुरद्रुमे । कल्पवृक्षे ॥ सम्यक्तनोतिपुष्पाणिकलितोसि सृच्छे॰तनोतेरुपसङ्ख्यानात्क : ॥ सम्यक्सन्तन्तोपुष्पाण्यस्मिन्नित्यधि

सम्प्रदायाद्यन्तमङ्गल्याऽस्माकट् । पुं॰ गजस्याक्षोर्ध्वतारयोर्भागे ॥

सन्दानिका । स्त्री॰ परिखदिरे । विट्खदिरे ॥

सन्दानित : । त्रि॰ बद्धे ॥ सन्दान्यते स्म ॥ दामखण्डमी । क्त : ॥

सन्दानिनी । स्त्री॰ गोगृहे ॥

सन्द्राव : । पुं॰ पलायने । प्रद्रावे ॥ सन्द्रवनम् । द्रुगतौ । समि युद्द्रुवद्रुतिघञ् ॥

सन्दाह : । पुं॰ मुखतालोष्ठदाहे ॥

सन्दिग्ध : । त्रि॰ संशयग्रस्ते । संशययुक्ते ॥ सम्दिह्यते स्म । दिह॰ । क्त : ॥

सन्दिग्धमति : । त्रि॰ सन्देहविषयीभूतबुद्धियुक्ते ॥

सन्दिग्धार्थ : । पुं॰ सन्देहविषयीभूतार्थे ॥ त्रि॰ तद्विशिष्टे ॥

संदित : । त्रि॰ बद्धे । बद्धपर्यायाः । मद्विसन्दानितं मूदितंसन्दितंसितमिति ॥ सन्दीयते स्म । दो बखण्डने । क्त : ॥ सन्द्यतेस्म । बा ॥ घधिते ॥

सन्दिष्टम् । न॰ वार्त्तायाम् । सन्देशे । त्रि॰ व्याहृते । उक्ते । कथिते ॥

सन्दिष्टार्थ : । त्रि॰ सन्देशहरे ॥ द्र॰ कथित ॥

संदिहान : । त्रि॰ सांशयिके । यथा । सन्दिहान : सांशयिक : संशयापन्नमानस : ॥

सन्दिह्यमान : । त्रि॰ संशयविषयीभूते । सांशयिके ॥

सन्दो । स्त्री॰ खट्वायाम् ॥ निम्नगा खट्टिकासन्दोतिविकाण्डशेष : ॥

सन्दीप्त : । त्रि॰ प्रज्वलिते । कलकठा॰ द्र॰ भा॰ ॥ यथायावत्तिष्ठतिदेशावंतावत्तत्त्वसमभ्यसेत् । सन्दीप्तं भवनेषोऽनुकूपं खनतिमार्वेति ॥ सन्दीप्यते स्म । दीपीदीप्तौ । क्त : । ईदित्वान्नेट् ॥

सन्दीप्य : । पुं॰ मयूरशिखावृक्षे ॥

सन्दृश : । त्रि॰ सन्दर्शनविषये ॥ समन्दृशीतिदृशिरूपसम् ॥

सन्देश : । पुं॰ संवादे । संदेसा॰ भ्र॰ भा॰ ॥ चोटकन्यद्वयोरपिदृ न्याथाक्षोमं भ्यमसिनीदेहेदूतौ सन्देशाव्छोरे । सन्दिश्यते । दिश॰ । कर्मणिघञ् ॥

सन्देशवाक् । स्त्री॰ वाचिकी । परे षोक्तार्थस्यपरम्प्रत्युक्तौ ॥ सन्दिश्यतेइतिसंदेश : । संदेशार्थ :॰ तस्यवाक् ॥ सन्दिष्टोर्थोयया वाचेति सा ॥

सन्देशहर : । पुं॰ दूते । संदेशं यश्चिमंहरति । हृञ्॰ । हरतेरनुद्यमनेऽच् ॥

एतेषां सर्व्ववर्णानामाश्रमौ द्वौ महेश्वरि । तेषामाचारधर्म्मांश्च शृणुष्वावहितामिते ॥ पुरैव कथितास्तावत् कलिसम्भवचेष्टितम् । तपःस्वाध्यायहीनानां नृणामल्पायुषामपि ॥ क्लेशप्रयासाशक्तानां कुतो देहपरिश्रमः । ब्रह्मचर्य्याश्रमो नास्ति वानप्रस्थोऽपि न प्रिये । गार्हस्थ्यो भैक्षुकश्चैव आश्रमौ द्वौ कलौ युगे । गृहस्थस्य क्रियाः सर्व्वा आगमोक्ताः कलौ शिवे । नान्यमार्गैः क्रियासिद्धिः कदापि गृहमेधिनाम् । भैक्षुकेऽप्याश्रमे देवि वेदोक्तदण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञे यतस्तच्छ्रौतसंस्कृतिः ॥ शैवसंस्कारविधिनावधूताश्रमधारणम् । तदेव कथितं भद्रे सन्न्यासग्रहणं कलौ । विप्राणामितरेषाञ्च वर्णानां प्रबले कलौ । उभयत्राश्रमे देवि सर्व्वेषामधिकारिता । सर्व्वेषामेव संस्काराः कर्म्माणि शैववर्त्मना । विप्राणामितरेषाञ्च कर्म्मलिङ्गं पृथक् पृथक् । आगमाद्गृहस्थः स्यात् संस्काराद्वाश्रमी भवेत् । गार्हस्थ्ये प्रथमं कुर्य्याद्यथाविधि महेश्वरि ॥ तत्त्वज्ञाने समुत्पन्ने वैराग्यं जायते यदा । तदा सर्व्वं परित्यज्य सन्न्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्य यत्नेन धनं दारांश्च धीमान् । प्रौढे धर्म्मान् विधायादौ चतुर्थे प्रव्रजेत्सुधीः ॥ मातरं पितरं वृद्धं भार्य्याञ्चैव पतिव्रताम् ॥ शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥ मातॄः पितॄन् शिशून् दारान् स्वजनान् बान्धवानपि । यः प्रव्रजति हित्वैतान् स महापातकी भवेत् ॥ मा [illegible] तकः । असमर्प्य स्वपित्रादीन् यो गच्छेद्भिक्षुकाश्रमे ॥ ब्राह्मणोऽपि प्रभिन्नाश्च सर्व्ववर्णाः संस्क्रियाः । शैवेन वर्त्मना कुर्य्यादेव धर्म्मः कलौ युगे । इति ॥ अपि च । अवधूताश्रमो देविकलौ सन्न्यास उच्यते । [illegible] । ब्रह्मज्ञाने समुत्पन्ने विरते सर्व्वकर्म्मणि । अध्यात्मविद्यानिपुणः सन्न्यासाश्रममाश्रयेत् ॥ विधाय वृद्धौ पितरौ शिशुं भार्य्यां पतिव्रताम् । त्यक्त्वाऽसमर्थान् बन्धून् प्रव्रजन्नारकी भवेत् ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च । कुलावधूतसंस्कारे पञ्चानामधिकारितेति ॥ सम्यङ् न्यासः सन्न्यासः । सम्यग् वाक् विद्यादित्यक्त्वा लोकद्वयभोगसन्न्याससन्त्यागः । संन्यास इत्यर्थः । यथा मुहूर्त्तमात्रकालिदासः । सन्न्यासः श्रुतियुग्मविषये [illegible] नौरिव स्थिरपदेनेऽप्यवगसिद्ध्यै सौमेज्य

तेन मासामष्टादीनामेकपिण्डसंबन्धेन सपिण्डता ॥ सपिण्डस्य भावः । तल् । टाप् ॥

सपिण्डीकरणम् । न॰ श्राद्धविशेषे । प्रेतपिण्डस्य पितृपिण्डेषु सम्मिश्रीकरणे ॥ द्वादशाहे वर्षे संवत्सरे सपिण्डीकरणमिति मुख्यकल्पः । तदशौचवर्षमासे तदशौचषष्ठमासे ; तथाप्यसमर्थे विपत्त : तथाप्यशक्तावशौचापगमे प्रथममासस्य द्वादशाभिर्द्विमेषाद्दशमासिकानिग्रहाविनिवर्त्येयादृशाह : सपिण्डीकरणकालः ॥ सपिण्डीकरणविषयेकूर्मपुराणे यथा । सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः । कुर्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ॥ प्रेतार्थं पितृपात्रेषु पात्रमासेचयेत्ततः । ये समानाद्र्यतिहाभ्यां पिण्डान्यप्येवमेव हि ॥ सपिण्डीकरणे श्राद्धं देवपूर्वं विधीयते । पितृनावाहयेदत्र पृथक् पिण्डं निर्दिशेत् ॥ ये सपिण्डीकृता प्रेता न तेषां स्यात् पृथक् क्रिया । यस्तु कुर्यात् पृथक् पिण्डं पितृहा सोऽभिजायते ॥ इति ॥

सपीतकः । पुं॰ राजकोषातक्याम् ॥

सपीतिः । स्त्री॰ आत्मीयेन जनेन सह मिलित्वैककालकर्तृकपाने । तुल्यपाने । पानम् । पापःनेस्त्रियां क्तिन् । पुमास्पीतीत्वम् । समाना पीतिः । समानस्यच्छन्दसीति समावः । सपीतिर्वा । सहस्य सः संज्ञायाम् ॥

सपीतिका । स्त्री॰ घर्षितघोषायाम् ॥

सपुलः । त्रि॰ पुलेन सहवर्त्तमाने ॥

सप्तकः । पुं॰ सप्तसङ्ख्यायाम् । त्रि॰ सप्तसङ्ख्याविशिष्टे ॥ सप्तभिः क्रीतवस्तुनि ॥ सङ्ख्यायाअतिशदन्तायाः कन्निति कन्प्रत्ययेन सिद्धम् ॥

सप्तकी । स्त्री॰ मेखलायाम् । काञ्च्याम् । कटिभूषणे ॥ सप्ति । षप समवाये । बाहुलकात्तन् । स्वार्थे कन् । यद्वा । सप्तभिरनेकाभिः किङ्किणीभिर्वा॰ समरान्वा॰ चायति । कैशब्दे । आतोऽनुपसर्गे कः । गौरादित्वान्ङीष् ॥

सप्तगङ्गम् । न॰ तीर्थविशेषे ॥

सप्तगोदावरम् । न॰ सप्तानां गोदावरीणां समाहारे । तीर्थविशेषे ॥

सप्तच्छदः । पुं॰ सप्तपर्णवृक्षे । काण्डे काण्डे सप्तच्छदा यस्य । सङ्ख्यायाअव्ययासन्नेति बहुव्रीहौ सार्थं स्वम् ॥ न॰ तत्पुष्पे ॥

सप्तजिह्वः । पुं॰ वह्नौ । अग्नौ ॥ सप्त काल्यादयो जिह्वा यस्य सन्नाधसीयग्रह : । तद्यथा । कालीकराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वा इति

सोतोभि : सप्तभिर्यैवैस्तथुनोप्तस धाव्यधात् । सप्तानोप्रीतधेनाभास प्तस्रोत : प्रचचते ॥

सप्तांशुपुंगव : । पुं॰ शनिग्रहे ॥

सप्तार्चि: । पुं॰ इमुनसि । शुक्रे । अग्नौ । वैश्वानरे ॥ सप्तार्चिर्विा- दस्य ॥ चित्रकहमे ॥ शनिग्रहे ॥ वि॰ क्रूरचक्षुषि ॥ सप्तार्चीं वि:॰सप्ततप्रधानादीप्तयः अनि धयानुचीतनामीत्यर्थ : ॥

सप्तावर्त : । पुं॰ तीर्थविशेषे ॥

सप्ताश्व : । पुं॰ इविद्रक्षे । उप्- परस्मौ । सूरे । सूर्ये ॥ सप्तसप्ता : सन्ध्यमा ॥ पर्याकर्थे ॥

सप्ताश्ववाहन : । पुं॰ सूर्ये ॥

सप्ति : । पुं॰ घोटके । पीती । तु रगे ॥ सपतिसैनायोसमवैति । प पसमपाये । क्तिच् । बाहुलकात् सिर्पा ॥

सप्तेन्द्रियम् । न॰ सप्ततप्राणेषु ॥

सप्तोपधातव : । पुं॰ ब॰ सप्तसङ्- ख्यकोपधातुषु । यथा । सास्विक तुल्यकाये सनोधाञ्जनशिघाऽऽल- धा : । रसकर्थे तिथिर्वयाएवैस प्तोपधातव : ॥ शरीरस्थसप्तधातु भगसप्तोपधातुषु । यथा । सान्येर जघनानीभांक्षाजीमशतिगच्छति । शाद्‌वर्गासमध : कोऽिय : सासदो स्तंतैस्रा । सेदोद्नास्तथापीशा तथैवोज्ज्वसमममृद्धतिधातुमवाभ्र याएवेसप्तोपधातवइति ॥

सफल : । वि॰ फलिते । फलयति ॥

सबल : । वि॰ सैन्ययुक्ते । सामर्थ्यं वति । बलेनसहवर्त्तइति ॥

सबलि : । पुं॰ दिनावसाने । उत्तर् रे । विकाले ॥ वि॰ बलिसहिते ।

सबाध : । वि॰ पीडायुक्ते । निषेध युक्ते ॥ बाधया॰ बाधेनचसहवर्त्त मान : ॥

सब्रह्मचारी । पुं॰ समानवेदव्रताचा रिणि । यथाहामर: । एकब्रह्मव्रता चारामिथ सब्रह्मचारिणइति । ब्रह्म वेदस्तदध्ययनार्थं व्रतमप्युपचाराद्ब्र ह्म॰ एकस्मिन्ब्रह्मणिव्रताचरणंये षांतेमिथ : परस्परं॰ सब्रह्मचारि णोऽघतोऽर्थ : ॥ समानं ब्रह्मच रति । व्रतइतिणिनि : । चरणेब्र ह्मचारिणीति॰ समानस्य स : ॥ स मानेब्रह्मणिचरतिवा ॥

सभर्तृका । स्त्री॰ पतिमत्याम् ॥ सह भर्त्तास्तियस्या: । नद्यृतश्चेतिकप् ॥

सभा । स्त्री॰ गोष्ठ्याम् । समज्यापरि षद्गोष्ठीसभासमितिसंसद : । आ स्थानीक्लीवमास्थानंस्त्रीनपुंसकयो: सद : ॰ इत्यमर : ॥ सभास्त्रिये गेहांशा । भाद्दीपत्नी । सुधीतिक: । अन्यतापीतिकोषा । भिदादय- या ॥ समानोभान्त्यस्यामितिवा ।

। व्याप्यत्वासिद्धिश्च० अव्यभिचरितसामानाधिकरण्यस्याभावः। नच स्वरूपासिद्धेरेव सूत्राद्व्यत्पत्तीर्निर्भयेऽलं व्यत्वमितिवाच्यम्। हेतुरितिपदं स्वरूपणीयम्० हेतुपदस्य गमकहेतोर्व्याप्तिविशिष्टपक्षधर्मस्य वाचकत्वम्० व्याप्तिविशिष्टपक्षधर्मत्वं चवाप्यर्थतास् । तथाच० तद्भिन्निश्चित्तसाध्यत्वं नैव साध्यसमत्वम् । अतएव साध्ये साध्यतावच्छेदकाभावः साधने साधनतावच्छेदकाभावस्य व्याप्यत्वासिद्धिः। यथा० पक्षतावच्छेदकाभावपक्षतावच्छेदकवद्‌दादेरन्यतमत्वं नाश्रयासिद्धित्वम्० यथाच० पक्षे हेत्वभावहेतुमद्‌दादेरन्यतमत्वे स्वरूपासिद्धित्वम्० तथा साध्यतावच्छेदकाभावादेरन्यतमत्वेन व्याप्यत्वासिद्धित्वं० वितथान्यतमत्वस्यासिद्धिसामान्यलक्षणत्वात् न्यत्वादेरपि व्याप्यत्वासिद्धभावस्त्वभिवद्गिः। तेषाममयमाशयः। व्याप्तिर्हि साध्यसम्बन्धितावच्छेदकरूपा० गुरुधर्मस्य साध्यसम्बन्धितावच्छेदकोऽसौ नीलधूमत्वादेः साध्यसम्बन्धितानवच्छेदकत्वान्न व्याप्तिरूपत्वम् । तथाच साध्यतावच्छेदकाभावादिरिव० साधनतावच्छेदके व्याप्यतानवच्छेदकत्वमपि

भवतिव्याप्यत्वासिद्धिरिति। ४८।

साध्यसिद्धिपादः। पुं० व्यवहारस्य चतुर्थपादे । सचनिर्णयपादः। यथा। प्रत्यर्थिनोऽग्रतो लेख्यमिति० भाषापादः प्रथमः। श्रुतार्थस्योत्तरं लेख्यमित्युत्तरपादो द्वितीयः। ततोऽर्थी लेखयेत्सद्यःप्रतिज्ञातार्थसाधनम् इति क्रियापादस्तृतीयः। तत्सिद्धौ सिद्धिमाप्नोतीति साध्यसिद्धिपादश्चतुर्थः। यथा। आधि साक्षिक्रिया साध्यसिद्धिभिः कामधेनुभिः। चाधिमचतुरं वस्तु चतुष्पादभिधीयते। इति मिताक्षरा॥

साध्वसम्। न० भये॥ साधुनृपस्य ति। यस०। अजितिसकुटः। तत्र। अथ: मसत्वात्। तस्मात्० साध्नाम्यसः॥ सम्भ्रमे॥

साध्वी। स्त्री० दुर्गायाम्॥ मेदायाम्॥ पतिव्रतायाम्॥ तल्लक्षणमाहहारीतः। आर्त्तार्त्ते मुदिताहृष्टे प्रोषिते मलिनाकृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रतेति॥ मनुरपि। पतिं यानाभिचरति मनोवाग्देहसंयता। सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते० इति॥ वोतोगुणवचनादिति ङीप्॥ शोभनायाम्॥

सानन्दः। पुं० गुच्छकरञ्जे॥ ध्रुवकभेदे॥ यथा। अष्टादशाक्षरे

भायमाने॰सद्य : फले । सन्दृष्टौप्र
स्यक्षेभवम् । अध्यात्मादित्वाट्ठञ्
। समानदृष्टिविषये ॥

सान्द्रम् । न॰ वने । त्रि॰ घने । नि
विडे । मृदौ । सद॰ मस्मृते । च
द्विषस्मिने । बाहुलकाट्टक् ॥

सान्द्रपुष्प : । पुं॰ बिभीतकवृक्षे ॥

सान्द्रस्निग्ध : । त्रि॰ घनस्निग्धे ।
मेदुरे ॥

सान्धिक : । पुं॰ शौण्डिके ॥ त्रि॰
सन्धिकर्त्तरि ॥

सान्धिवेलम् । न॰ संधिवेलायाम् भ
वे ॥ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥

सान्ध्य : । पुं॰ रवौ ॥ सन्धिभवे । स
न्ध्याधाम्य : । सन्धिवेलादित्वा
दण् ॥

सान्ध्यकुसुमा । स्त्री॰ त्रिसन्धिपुष्पवृ
क्षे ॥

सान्नहनिक : । त्रि॰ योधानांवर्मसन्ना
हप्रयर्त्तके ॥ सन्नहनंप्रयोजनमस्य ।
तदस्यप्रयोजनमितिठक् ॥

साम्नाय्यम् । न॰ हीतव्यद्रव्ये । हवि
षिसम्यङ्नीयतेहोमायेमग्निम्प्रति
। णीञ्॰ । पाय्यसान्नाय्येतिण्यदा
यादेश : समोदीर्घश्चनिपात्यते ॥

सान्निध्यम् । न॰ नैकट्ये । निकटे ।
सन्निधिरेव । चतुर्वर्णादित्वात्
स्वार्थेष्यञ् ॥

सान्निपातिक : । त्रि॰ सन्निपातकरो
गे । सन्निपातस्यशमनहेतोःपनंसी
। सन्निपाताच्चेतिठञ् ॥

साभ्यासिक : । पुं॰ भिक्षौ । पाराश
रिणि ॥

सान्वय : । त्रि॰ सम्बन्धिनि । कुलस
म्हिते । पुत्रपौत्रादिसहिते । यथा
। येनधौत्यहिमीवेदमन्यतकुशतेत्र
मम् । सजीवन्नेवमुद्गलमागुणश्च
तिसान्वय : ॥

सापत्न : । पुं॰ सपत्नीतनये । सपत्न्या
अपत्यम् । शिवादिभ्योण् । तत्रस
पत्नेतिपाठेपित्तिविधिविशिष्टपरिभाष
या॰ सपत्नीशब्दादपिसामान्यवि
धया॰ढकंबाधित्वाऽणितिबोध्यम्
। वैरिपुत्तनये ॥ सपत्नस्यापत्यमित्यण्
॰ शिवादित्वात् ॥

सापत्नेय : । त्रि॰ सपत्न्यास्तनये ॥
सपत्न्याअपत्यम् । स्त्रीभ्योढक् ।

सापत्नी । स्त्री॰ सपत्न्यादुहितरि ॥

सापत्नपा । स्त्री॰ लज्जायाम् ॥

सापराध : । त्रि॰ कृतापराधे ॥

सापिण्ड : । पुं॰ सपिण्डे । प्रज्ञा
दिभ्यश्चेतिस्वार्थेऽण् ॥

साविण्ड्यम् । न॰ सपिण्डतायाम् ॥

साप्तपदीनम् । सख्ये । मित्रत्वे ॥
सप्तभि : पदैरवाप्यते । साप्तप
दीनंसख्यमितिसाधु ॥

साफल्यम् । न॰ सफलतायाम् ॥

साभाव्यापत्ति : । स्त्री॰ साम्यप्राप्तौ ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव चेति ॥

सामान्यम्। क्ली॰ जातिः॥ तद्द्विविधम्। यथा। सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च। द्रव्यादित्रिकवृत्तिस्तु सत्तापरतयोच्यते। परभिन्ना च या जातिः सैवापरतयोच्यते। व्यापकत्वात् पराऽपि स्याद्व्याप्यत्वादपराऽपि च। द्रव्यत्वादिकजातिस्तु परापरतयोच्यते। इति भाषापरिच्छेदः॥ तल्लक्षणं यथा। नित्यत्वे सत्यनेकसमवेतत्वमिति। अनेकसमवेतत्वं संयोगादीनामप्यस्ति॰ अतः सत्यन्तम्। नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्ति॰ अत उक्तमनेकेति। नित्यत्वे सत्यनेकवृत्तिसामान्यमुपेत्यसमवेतत्वमुक्तम्। एकव्यक्तिवृत्तिस्तु न जातिः। यदुक्तम्। व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥ एकव्यक्तिकत्वादाकाशत्वं न जातिः। तुल्यवृत्तिकत्वाद्घटत्वं कलसत्वं न जातिद्वयम्। सङ्कीर्णत्वात् भूतत्वं मूर्त्तत्वं न जातिः। अनवस्थाभयात् सामान्यत्वं न जातिः। विशेषव्यावृत्तस्वभावस्वरूपहानेः स्याद्विशेषत्वं न जातिः। समवायसम्बन्धाभावात् समवायो न जातिः। द्रव्यादित्रिकवृत्तिरिति। परत्वमधिकदेशवृत्तित्वम्॰ अपरत्वमल्पदेशवृत्तित्वम्। सकलजात्यपेक्षया अधिकदेशवृत्तित्वात् सत्तायाः परत्वम्। एतद्बोधनाय द्रव्यादीति। तदपेक्षया चान्यासां जातीनामपरत्वम्। परभिन्ना सत्ताभिन्ना। व्यापकत्वात् पराऽपि स्याद्व्याप्यत्वादपराऽपि च। पृथिवीत्वाद्यपेक्षया व्यापकत्वात्॰ अधिकदेशवृत्तित्वात्॰ द्रव्यत्वं परत्वम्। सत्तापेक्षयाऽल्पदेशवृत्तित्वात्॰ द्रव्यत्व॰ अपरत्वञ्च। तथा च परत्वमपरत्वञ्चोभयमविरुद्धम्। इति मुक्तावली॥ नित्यमेकमनेकानुगतं सामान्यम्। तच्च द्रव्यगुणकर्म्मवर्त्ति॰ तर्कसङ्ग्रहः॥ सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकतेति लक्षणलक्षितैकात्म्यालङ्कारविशेषः॥ यथा। प्रस्तुतस्य यदा येन गुणसाम्यविवक्षया। ऐकात्म्यं बध्नतो योगात् तत्सामान्यमिति स्मृतम्। अथाह अप्रस्तुतार्थेन विवक्षितुं यद्वस्तु तार्थेन सम्पृक्तमपरित्यक्तनिजगुणमेकात्मतया निबध्यते॰ तत् समानगुणनिबन्धनात्॰ सामान्यम्। उदाहरणम्। मलयजरसविलिप्ततनवो नवहारलताविभूषिताः सिततर

रदन्तपञ्चकसंख्यकवर्णोक्तविरामयुक्ताः । अप्रस्तुतचित्तघास्थित-लयस्थिराभिर्विभाव्यतानताः प्रियसति प्रयाभिसुखमेव निरस्तभीतोऽभिसारिकाः ॥ अप्रस्तुतसदृशयोरन्यूनानतिरिक्तया निपत्य धवलाव्यसेधात्मताहेतुः । अतएव पृथग्भावेनानयोरुपलक्षणम् ॥ यथाया । विभक्तधातुत्यक्तपांवधूर्माधर्याधीतागतलागतानि । स्पृष्टाः सहिष्वदिमापतिष्यन्कोविदविध्यन्नचम्पकानि ॥ अतनिमित्तात्मरजनितापिनाभास्प्रतीतिः अथमप्रतिपन्नमभेदमभ्युदसितुमुत्सहते प्रतीतस्याप्रतीतिबाधायोगात् ॥

सामान्यम् । त्रि॰ साधारणे । अविशेषे । तुल्यतायाम् ॥ अनेकसम्बन्धिवस्तुनि ॥ उत्सर्गे ॥

सामान्यच्छलम् । न॰ छलभेदे ॥ सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ ५३ ॥ सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य॰ अतिसामान्ययोगादसम्भवदर्थकल्पनया॰ दूषणाभिधानं सामान्यच्छलम् । यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते॰ ब्राह्मणत्वं न विद्याचरणसम्पदं साधयतीति कल्पयित्वा॰ परो वदति कुतो ब्राह्मणत्वेन॰ विद्याचरणसम्पत्॰ व्रात्ये व्यभिचारात् ॥ ५३ ॥

सामान्यतोदृष्टम् । न॰ अदृष्टलक्षणसामान्यविषयेऽनुमाने ॥

सामान्यलक्षणा । स्त्री॰ अलौकिकप्रत्यक्षविशेषे । सा तु॰ व्याप्यव्यापकसामान्यज्ञानम् । यथा एकघटदर्शने सकलघटज्ञानं भवति इह घटत्वादिज्ञानम् । तत्प्रमाणं यथा । अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्तितः । सामान्यलक्षणाज्ञानलक्षणायोगजस्तथा ॥ आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते । तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्षते ॥ इति भा॰ ॥

सामान्यविधिः । पुं॰ अनारब्धविधौ । यथा । न हिंस्यात्सर्वा भूतानीति ॥

सामान्यशासनम् । न॰ सामान्याधिकारे ॥ राजलिख्यविशेषे ॥

सामान्या । स्त्री॰ नायिकाभेदे । यथान्तरे ॥ व्यर्थतस्थिरासर्वत्वभिमतफलदा भवेत्सामान्या ॥

सामान्याभिनयः । पुं॰ वागङ्गसत्त्वजेऽभिनये ॥ यथा । सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः इति ॥

सामासिकः । पुं॰ साङ्ख्ये पिके ।

सार्पिष : । त्रि॰ सर्पिः सम्बन्धिनि । सर्पिषा संस्कृते ॥ अण् ॥

सार्पिष्कः । त्रि॰ घृतसंस्कृते । सर्पिषा संस्कृतं तेन संस्कृतमितिठक् ॥ सार्पिष्कन्दाधिकं सर्पिर्दधिभ्यां संस्कृतं क्रमादिति हेमचन्द्रः ॥

सार्व्वः । पुं॰ अर्हति । जिने ॥ त्रि॰ सर्वहिते । सर्वस्मै हितः । सर्वपुरुषाभ्यां णढञाविति ण : ॥

सार्व्वजनिक : । त्रि॰ सर्व्वजनीने ॥ सर्वजन : । पूर्वकालेकेतिसमासः । सर्वजनाय हितः । सर्वजनाट्ठञ् खश्चेति ठञ् ॥

सार्व्वभौम : । पुं॰ सर्वपृथ्वीपतौ । चक्रवर्त्तिनि । कान्यकुब्जदेशे । उत्तरदिग्गजे । सर्वस्याम् भूमौ विदित : । सर्वविदितश्च स्यण् । अनुशतिकादित्वादुभयपदवृद्धि : ॥ सर्वभूमेरीश्वरो वा । तस्येश्वर इत्यण् ॥ सर्वभूमिनिमित्तं संयोगउत्पातो वा । सर्वभूमिपृथिवीभ्याम् अणञौ वित्यण् ॥

सार्व्वजनीन : । त्रि॰ सर्व्वजने साधौ ॥ खञ् ॥

सार्व्वलौकिक : । त्रि॰ सर्वलोकविदिते ॥ सर्व्वलोके विदित. । लोकसर्वलोकाट्ठञ् । अनुशतिकादि. ॥

सार्षपम् । न॰ सर्षपजाते ॥ गुणा यथा । कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु । अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत् ॥ सक्षारं लवणं तीक्ष्णं स्वादुशाकेषु निन्दितम् ॥ सर्षपतैले ॥ दीपनं सार्षपं तैलं कटुपाकरसं लघु । लेखनं स्पर्शवीर्योष्णं तीक्ष्णं पित्तास्रदूषकम् । कफमेदोनिलार्शोघ्नं शिर : कर्णामयापहम् । कण्डूकोठकृमिश्वित्रकुष्ठदुष्टव्रणापहम् ॥ तद्वद्राजिकयो : स्याद्विशेषान्मूत्रकृच्छ्रकृत् ॥ राजिकयो : । कृष्णराजिकारक्तराजिकयो : ॥

सार्ष्टिता । स्त्री॰ समानर्द्धित्वे । सलोक्यत्वे ॥

साल : । पुं॰ हरमार्षे । प्राकारे ॥ सर्व्वपादपे । सर्गुणा॰ हू॰ म॰ प्र॰ । सल्यते । चलगतौ । कर्म्मणिघञ् ॥ न॰ धूनके ॥

सालग्राम : । पुं॰ ग्रालग्रामे ॥

सालन : । )
सालनिर्यास: । ) पुं॰ धूनके । सर्ज्जरसे ॥

सालपर्णी । स्त्री॰ शालपर्ण्याम् । विदारिगन्धायाम् ॥ हू॰ म॰ र॰ को ॥ साल : पर्णमस्या : । सालशब्दस्य भाखपर्णसदृशलक्षणा । पाककर्णेतिङीप् ॥

सालपुष्पम् । न॰ स्थलपद्मे ॥

सालरस : । पुं॰ रालि । धूनके ॥

सालवेष्टः । पुं० धूनके ॥

सालशृङ्गम् । न० प्राचीराग्रे ॥

सालसारः । पुं० तरौ । हिङ्गुनि ॥

सालिका स्त्री० शारिकायाम् ॥ पत० । राव् त् । इत्यम् ॥

सालोक्यम् । न० एकलोकवासे । सलोकतायाम् ॥

सालिकः । पुं० पक्षिविशेषे । गृह शलि । ध्रुवकण्डे ॥

साल्वः । पुं० देशविशेषे । तद्देशस्थे ० पुंभूम्नि० कारकुक्षीयेषु ॥ साल्वास्तुकारकुक्षीयामरवस्तुदशेर का इति हेमचन्द्रः ॥ पुं० नृपति विशेषे ॥ न० मूलविशेषे ॥ साल्वमूलम् । पुष्पम् नैपुणफलमि त्यर्थोस्तु ॥ अभिप्रामाण्यात्सा ल्वशब्दस्य हलत्वे यित्विन्यादिर्व्यक्ता दित्वयाबोध्यम् ॥ त्रि० साल्वदे शजे । साल्वेषुभवः । कच्छादि भ्यश्चत्वग् ॥ यथा० साल्वः पद तिर्व्रजति ॥

साल्वकः । त्रि० साल्वदेशजे ॥ साल्वा दौ ॥ गवि ॥ यवाग्वाम् ॥ सा ल्वेषु जात । अपदातौसाल्वादि ति० गोयवाग्वोश्चेतिचवुञ् ॥

साल्वती । स्त्री० नाव्यवृत्तौ ॥

साल्वघ्नः । पुं० श्रीकृष्णे ॥

साल्वेयः । पुं० नृपान्तरे ॥ तस्या पत्ये ॥ साल्वेयस्यापत्यं० राजा



वा । साल्वेयगान्धारिभ्यांश्चेत्यञ् ॥

सावधानः । त्रि० समाहितान्तः क रणे ॥ अवधानेनसहवर्त्तमानः ॥ अवेतने ॥

सावनः । पुं० यज्ञकर्मान्ते ॥ यजमाने ॥ प्रचेतसि । वरुणे ॥ दिवसवि शेषे ॥ यथा । अरुणोद्ध्युदयद्वय मध्यवर्त्तिदिनमावनसंज्ञदिनस्फुट म् ॥ अपिच ॥ अहोरात्रेण्यचैकेन सावनोदिवसःस्मृत । इति । त्रि शद्दिनात्मकोमासि ॥ त्रिंशतासौ र्दिवसैः सावनः परिकीर्त्तितः । न० यजमानसम्बन्धिदिने । सोम वाभिषवनद्वयस्याशौचासाध्यत्वात् तत्सम्बन्धिदिनं सावनमितिमाध वाचार्य्यः ॥

सावयवम् । न० व्यक्तौ ॥ अवयवमन यवोमिथः सश्लेषः मिश्रणंसं शोगकृतियावत् अप्राप्तिपूर्विका प्राप्तिः संयोगः तेनसहवर्त्तत इ तिसावयवम् । तथाहि०पृथिव्याद्य ः परस्परं संयुज्यन्ते ०एवमन्यो पि । नतुप्रधानस्यद्रव्यादिभिः संयोगस्तादात्म्यात् । नापिसत्त्वर जस्तमसामपरस्परं संयोगोऽप्राप्ते रभावात् ॥ त्रि०अवयवविशिष्टे ॥

सावरः । पुं० मृगविशेषे ॥ न० त न्वांसि ॥ यथा । मांसंसावरसम्भृत माचितमुधाघृतै । वैसवारोपमा

सितवाजी । पुं॰ अर्जुने ॥
सितशिंशपा । स्त्री॰ श्वेतशिंशपायाम् ॥
सितशिम्बिकः । पुं॰ गोधूमे
सितशूरणः । पुं॰ वनशूरणे ॥
सितसर्षपः । पुं॰ श्वेतसर्षपे । सिद्धार्थे ॥
सितसायका । स्त्री॰ श्वेतशरपुङ्खायाम् ॥
सितसारः । पुं॰ शालिञ्चशाके ॥
सितसारकः । पुं॰ सिन्दुके । शालिञ्चे ॥
सितसिंही । स्त्री॰ श्वेतकण्टकार्याम् ॥
सितसिन्धुः । स्त्री॰ गङ्गायाम् ॥
सिता । स्त्री॰ शर्करायाम् ॥ सिनोति । षिञ् बन्धने । वर्णिकृष्टिभ्य क्तः । टाप् । शुभ्रवर्णत्वात् ॥ खण्डन्तु सिकताकारं सुश्वेतं शर्करा सिता । सितामधुराकथ्यावातपित्तास्रदाहहृत् ॥ मूर्च्छाच्छर्दिज्वरान्हन्तिसुशीताशुक्रकारिणी ॥ मल्लिकायाम् ॥ ज्योत्स्नायाम् ॥ सुरायाम् ॥ गिरिकर्णिकापराजितायाम् ॥ वाकुच्याम् ॥ त्रायमाणायाम् ॥ नद्यां ॥ मिश्रायाम् ॥ विदार्याम् ॥ सितकण्टकार्याम् ॥ श्वेतदूर्वायाम् ॥ चन्द्रिकायाम् ॥ स्फटिकायाम् ॥ गङ्गायाम् ॥

सितांशुः । पुं॰ चन्द्रे ॥ कर्पूरे ॥
सितांशुतैलम् । न॰ कर्पूरतैले ॥
सितखण्डः । पुं॰ मधुशर्करायां ॥
सिताङ्गः । पुं॰ वालुकागडमत्स्ये ॥
सिताङ्ग । पुं॰ श्वेतरोहिते ॥
सिताजाजी । स्त्री॰ श्वेतजीरके ।
सिताद्रि । पुं॰ सुमेरौ ॥ सितायाः आद्रिः ॥
सितानन । पुं॰ गरुडे ॥
सितापाङ्गः । पुं॰ मयूरे ॥
सिताञ्जनम् । न॰ श्वेतकाचे ॥
सिताभः । पुं॰ कर्पूरे ॥
सिताभ्र । पुं॰ हिमवालुकायाम् । कर्पूरे ॥ सितं श्वेत्यं॰ वस्तवा॰ चन्द्रांश॰ अभति । अभगतौ । कर्मण्यण् ॥ शुक्लत्वात् । सिता भ्रमिव वा ॥
सिताभ्रकम् । न॰ कर्पूरे ॥
सिताम्बरः । पुं॰ श्वेतवस्त्रपरिहितव्रतिनि ॥ त्रि॰ शुक्लवस्त्रवति ॥
सिताम्भोजम् । न॰ शुक्लपद्मे । पुण्डरीके ॥ सितं शुक्लञ्च तदम्भोजञ्च ॥
सितार्ज्जकः । पुं॰ श्वेततुलस्याम् कुठेरके ॥
सितालता । स्त्री॰ श्वेतदूर्वायाम् ॥
सितालर्कः । पुं॰ श्वेतमन्दारे ॥

सिञ्चिता । स्त्री॰ पिप्पल्याम् ॥

सितः । पुं॰ शुक्लपक्षे ॥ अपदाते । गौरवर्णे । वाणे । शरे ॥ न॰ चन्दने ॥ रूप्ये ॥ मूलके ॥ त्रि॰ समासे । अवसिते ॥ शुक्लवर्णविशिष्टे । धवले ॥ बद्धे । बंधा॰ द्र॰ भा॰ ॥ ज्ञाते । सोऽवसेय । षिञ् बन्धने । क्तः । अवसेय । षो॰ क्तः । अतिरुक्तौ तीत्व॑ धा ॥ सितोऽसितो । अक्लिषु षिञ्य : क्तः ॥ समाप्ते ॥

सितकण्टा । ) स्त्री॰ श्वेतकण्ट-
सितकण्टारिका ) कार्याम् ॥

सितकण्ठः । पुं॰ दात्यूहपक्षिणि ॥

सितकरः । पुं॰ चन्द्रे ॥ कर्पूरे ॥

सितकर्णी । स्त्री॰ वासके ॥

सितकुञ्जरः । पुं॰ इन्द्रे ॥ चन्द्रगजे ॥

सितगङ्गा । स्त्री॰ कामरूपप्रसिद्धनदीविशेषे । स्वर्णदायाम् ॥ द्र॰ कालिका॰पुराणम् ॥

सितगुञ्जा । स्त्री॰ श्वेतगुञ्जायाम् । काकपीलौ ॥

सितचिह्नः । पुं॰ वालुशागडे॰मत्स्ये ॥

सितच्छत्रम् । न॰ नृपच्छत्रे ॥

सितच्छत्रा । स्त्री॰ शतपुष्पायाम् ॥ सितं यद्‌धत्रं पुष्पं यस्याः ॥

सितच्छत्रितः । त्रि॰ श्वेतच्छत्रयुक्ते ॥

सितच्छदः । पुं॰ हंसे ॥ श्वेतच्छदविशिष्टे ॥ त्रि॰ सिताः शुभ्राः छदा यस्य ॥

सितच्छदा । स्त्री॰ श्वेतदूर्वायाम् ॥

सिततुरगः । पुं॰ अर्जुनाख्यपाण्डवे ॥

सितदर्भः । पुं॰ श्वेतकुशे ॥

सितदीप्यः । पुं॰ श्वेतजीरके ॥

सितधातुः । पुं॰ खटिन्याम् ॥

सितपक्षः । पुं॰ हंसे । शुक्लपक्षे ॥ त्रि॰ तद्वति ॥

सितपर्णी । स्त्री॰ अर्कपुष्पिकायाम् ॥

सितपाटलिका । स्त्री॰ श्वेतपाटलायाम् ॥

सितपुङ्खा । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितपुष्पः । पुं॰ तगरवृक्षे ॥ श्वेतरोहिते ॥ काशे ॥ न॰ कैवर्तीमुस्तके ॥

सितपुष्पा । स्त्री॰ मल्लिकायाम् ॥

सितपुष्पी । स्त्री॰ श्वेतापराजितायाम् ॥ नागदन्त्याम् ॥

सितमरिचम् । न॰ शिग्रुबीजे ॥ शुभ्रमरिचे ॥

सितमाषः । पुं॰ राजमाषे ॥

सितरश्मिः । पुं॰ गौरवर्णे ॥

सितरश्मिः । पुं॰ चन्द्रे ॥

सितवर्षाभूः । पुं॰ सुवर्चलायाम् ॥

सिन्दूररस : । पुं॰ रससिन्दूराभिधौषधे ।

सिन्दूरित : । त्रि॰ सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीत्यस्मात्कर्म्मणि क्तः । णाविष्ठवद्भावात् विन्मतोर्लुक् ॥

सिन्दूरी । स्त्री॰ रोचन्याम् ॥ रक्तचित्रकायाम् । धातक्याम् । सिन्दूरीविषपित्तास्रकफानाशनी च रोचिका ॥

सिन्धु : । पुं॰ अब्धौ । समुद्रे ॥ अन्द्व्यर्णे • धापिडश । सान्द्र० । स्यन्देः सम्प्रसारणं धश्च स्तुः ॥ नमथौ ॥ रामैवभरतायादित्तदेशविशेषे ॥ काश्मीरदेशप्रसिद्धे नदविशेषे ॥ गजमदे । सिन्धुवारवृक्षे ॥ रागविशेषे ॥ श्वेतटङ्कणे ॥

सिन्धु : । स्त्री॰ नद्याम् । सरिति ॥ नदीविशेषे ॥ तज्जलगुणायथा । शतद्रोर्विपाशायुत : सिन्धुनद्या : सुशीतं लघुस्वादुसर्वाम्रयघ्नम् । जलं निर्मलं दीपनं पाचनञ्चप्रदत्ते बलं बुद्धिमेधायुरञ्च ॥

सिन्धुक : । पुं॰ सिन्दुके । निर्गुण्डाम् ॥ सिन्धुशब्दात्स्वार्थे संज्ञायांशकन् । गुणायथा । सिन्धुक : स्मृतिद्स्तिक्त : कषाय : कटुकोलघु : । केश्योनेत्रहितोहन्तिशूलशोथाममारुतान् ॥ क्रमिकुष्ठ

चिञ्चाग्रन्थाग्निलापितद्विधा ॥ सिन्धुवारवज्जन्तुमतश्च यष्टहर्षघ्नु ॥ त्रि॰ सिन्धुजाते ॥ सिन्धुफल राभ्यांकन् ॥

सिन्धुकफ : । पुं॰ समुद्रफेने ॥

सिन्धुप्रभव : । पुं॰ तीर्थविशेषे ॥

सिन्धुरम् । न॰ श्वेतटङ्कणे ॥

सिन्धुखेल : । पुं॰ सिन्धुदेशे ॥

सिन्धुजम् । न॰ सैन्धवलवणे ॥ सिन्धुजातम् ॥ सप्तम्यांजनेर्ड : ॥ त्रि॰ समुद्रजाते ॥

सिन्धुजन्मा । पुं॰ चन्द्रे ॥ न॰ सैन्धवलवणे ॥

सिंधुजा । स्त्री॰ लक्ष्म्याम् ॥

सिंधुडा । स्त्री॰ मालवरागभार्यायाम् ॥

सिंधुनन्दन : । चन्द्रे ॥

सिंधुपुत्र : । पुं॰ चन्द्रे ॥ मर्कटेन्दौ ।

सिंधुपुष्प : । पुं॰ शङ्खे ॥

सिंधुमन्थजम् । न॰ सैन्धवलवणे ॥

सिंधुर : । पुं॰ हस्तिनि ॥

सिंधुरद्वेषी । पुं॰ सिंहे ।

सिंधुरवदन : । पुं॰ गणेशे ॥

सिंधुराज : । पुं॰ समुद्रे ॥

सिंधुलवणम् । न॰ सैंधवे ॥

सिंधुवार : । पुं॰ श्वेतमाले ॥ सिंधुवारे । निर्गुण्डाम् ॥ सिंधुवारोविषघ्नः पाचनकुष्ठघ्नयोपदः ॥ सिंधुंश्योति॰ वारयतिवा । हन्

याम् ॥

सुगन्धभूतृणम् । न० गन्धतृणे ॥

सुगन्धमूला । स्त्री० रास्नायाम् ॥ स्थलपद्मिन्याम् ॥ सुगन्धीमूत्रेयस्याः ॥

सुगन्धा । स्त्री० रास्नायाम् ॥ शोभनो गन्धः । सुगतीतिसमासः । सुगन्धोऽस्त्यस्याः । अर्शआद्यच् ॥ वन्ध्याम् ॥ गङ्गापत्र्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ नवमालिकायाम् ॥ तुलस्याम् ॥ सप्तचर्मटिकायाम् ॥ शतपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ अजमोदे ॥ सल्लक्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्धामलकम् । न० सर्वौषधिभिः शुष्कामलकस्य योगे । यथा । सर्वौषधिसमायुक्ताः शुष्कास्त्वामलकस्य च । यस्तात्तदाय योगः स्यात् सुगन्धामलकाभिधः ॥ इति राजनिर्घण्टः ॥

सुगन्धिः । पुं० शोभनगन्धे । सुरभौ । घ्राणतर्पणे । इष्टगन्धे ॥ तुम्बुरुवृक्षे । तीक्ष्णगन्धे ॥ परमात्मनि ॥ प्रतिबोधधर्मटीकायां नीलकण्ठः ॥ सहकारे ॥ न० एलवालुके । हीवेरे ॥ कुङ्कुमे ॥ धान्याके ॥ मुस्तके ॥ कशेरुणि ॥ गन्धतृणे ॥ पिप्पलीमूले । त्रि० सुगन्धयुक्ते ॥ शोभनो गन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्य इतीत्त्वम् ॥ गन्धस्येत्त्वे तदेकान्तग्रहणं नाद्रियन्ते कवयः । यथा । कण्डूयमानः कटभुग्नकरिणो मदेन स्कन्धं सुगन्धिमनुलीनवता नगस्येति माघे० सुगन्धिं शोभनगन्धमित्यर्थात् ॥

सुगन्धिकः । पुं० सिह्लके । तुरुष्के महाशालौ ॥ गन्धके ॥ न० कह्लारे ॥ पुष्करमूले ॥ गौरसुवर्णे । वारिके । पद्मयाम्रविशेषे ॥ सुपर्णे ॥ उशीरे ॥

सुगन्धिकुसुमम् । न० सुगन्धिपुष्पे । पुं० पीतकरवीरे ॥ शोभनगन्धवन्ति पुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री० पृक्कायाम् ॥

सुगन्धिता । स्त्री० सौरभ्ये ॥ शोभनो गन्धोऽस्य० तस्य भावः । तल् । टाप् ॥

सुगन्धितैलम् । न० । सुगन्धिमति । तैलकादिपानीये ॥

सुगन्धिफला । स्त्री० जातीफले न० पूगफलेन संयुक्तो लवङ्गवालिकाफले ॥

सुगन्धिनी । स्त्री० आरामशीतलायाम् ॥

सुगन्धिमूलम् । न० उशीरे ॥

सुगन्धिमूषिका । स्त्री० छुछुन्दर्याम् ॥

१, सुतौ । नरनारायणरूपेभगवति धर्मादिनाथमिसुतौ । भगवान्ससखेन्द्रि याचार्यस्तपःयायस्तपंतयोऽसौ तिसुत पालनरनारायणः ॥

सुतराम् । अ० अत्यन्ते । अतिशये ॥ अपधारितार्थप्रतिपादके ॥ यथा । स्युगिरिजमकाशुत्र्यम्भोनादि ष्णुवीरारि : । ददासि मोक्ष सुतरां विष्णुरहंकारपञ्चनादिति ॥ विषमनविभक्त्यादिना । सुशब्दात्तर प् । किमेत्तिङव्ययेभ्यादिनामुप्रत्यय. । तद्धितश्चासर्वविभक्तिरित्यव्यय संज्ञा ॥

सुतक्षीरी । स्त्री० देवदालीलतायाम् ॥

सुतर्दन : । पुं० ताम्राक्षे । कोकिले ॥

सुतच : । पुं० पद्मालिकाख्ये ॥ नागविद्याप्रभेदे ॥

सुतस्त्करा । स्त्री० सप्तपुत्रप्रसाम् ॥

सुतश्रेणी । स्त्री० मूषिकपर्ण्याम् ॥ सुतानांश्रेणिरस्याः ॥ पुत्रश्रेण्दि ॥

सुता । स्त्री० ऋश्यपर्ण्यां । कन्यायाम् ॥ दुरालभायां ॥

सुतात्मज : । पुं० पौत्रे । दौहित्रे ॥ सुतस्यसुतायावात्मजः ॥

सुतात्मजा । स्त्री० पौत्र्याम् ॥ दौहित्र्याम् ॥ सुतस्यसुतायावात्मजा ।

सुतारम् । न० त्रितीयायामष्टान्यतरा यांसिद्धौ ॥

सुतारका । स्त्री० बुद्धशासनदेवी विशेषे ॥

सुतिक्त : । पुं० भूनिम्बे । किराततिक्ते ॥ पर्पटे । पित्तपापडा० इ० भा० प्र० ।

सुतिक्तक : । पुं० पारिभद्रे । भूनिम्बे ॥

सुतिक्ता । स्त्री० कोशातक्याम् । मृद्वफालिकायाम् ॥

सुतिक्तिका । स्त्री० कोशातक्याम् ।

सुती । त्रि० पुत्रवति ॥

सुतीक्ष्ण : । पुं० शिग्रौ ॥ श्वेतशोभाञ्जने ॥ रामायणप्रसिद्धेमुनिविशेषे । नाम्नासुतीक्ष्णश्चरितैर्दान्तः ॥ त्रि० अतिशयेनखरे ॥

सुतीर्थकम् । न० । तीर्थविशेषे ॥

सुतुङ्ग : । पुं० नारिकेलागरे ॥ पशाखासूत्रांशविशेषे । अत्युन्नतुङ्गे ॥ त्रि० अतिशयोच्चे ॥

सुदत्त : । पुं० सुन्दरे । चक्रवर्त्ति । नगबद्धमेरुविशेषे ॥

सुतेजन : । पुं० धन्वङ्गे । धन्वनतरौ ॥

सुतेजा : । पुं० सुतेजस्त्वगुणविशिष्टेवृत्तौ ॥ स्वर्गे ॥ प्राकल्पादि विशेषे स्त्री० आदित्यभक्तायाम् ॥ त्रि० तीक्ष्णान्विते ॥

सुतेजा । स्त्री० महाज्योतिष्मत्याम् ।

सुत्या । स्त्री० अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्० सूयतेसोमोऽस्मिन्० अस्यां वा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पुं० गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते० पालयति । त्रैङ् पालने । आतोमनिन्० सर्वधातुभ्योमनिन् वा ॥

सुत्वा । पुं० अभिषवस्नाते । यज्ञाङ्गस्नानकर्त्तरि ॥ सुतवान् । षुञ्० । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री० मातरि ॥ ङ्वनिबन्तात्० वनोरचेति ङीप्रौ ॥

सुदुग्धा । स्त्री० दुग्धाख्यक्षुपे । सुदुग्धिकायां ॥ मेरुजम्बुद्रुमे ॥

सुदुग्धिका । स्त्री० क्षुपभेद० इ० गौ० दे० भा० प० ड्घो । दुग्धफेनायाम् । भस्मरोचायाम् ॥

सुदण्ड: । पुं० वेत्रे ॥

सुदण्डिका । स्त्री० गोरक्ष्याम् ॥

सुदत् । त्रि० शोभनदन्तविशिष्टे ॥ शोभनादन्तायस्य । वयसिदन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री० तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शन: । पुं० । हरेश्चक्रे ॥ अस्य लक्षणं यथा । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । चक्रं स्यात्तद्विपार्श्वे: शंखयष्टीहरिःस्मृतद्युति ॥ जिनानांवलदेवे ॥ सुचार्हन्तृपितरि ॥ शोभनंदर्शनमस्य । अश्लौ : सुविनयस्त्वशिवा । भावाभावासियुधिष्ठिरसिद्धसिद्धिभ्यो युच् ॥ गन्धर्वे ॥ जम्बूद्वीपे ॥ सुदर्शनाकारत्वात् ॥ मेरौ ॥ वंशे ॥ राजभेदे ॥ न० यक्षनगरे । अनुगमने ॥ त्रि० सुदृश्ये ॥

सुदर्शनचूर्णम् । न० भावप्रकाशोक्तज्वररोगघ्नौषधविशेषे ॥

सुदर्शनद्वीप: । पुं० न० जम्बुद्वीपे ॥

सुदर्शना । स्त्री० आज्ञायाम् ॥ ओषधिप्रभेदे । सोमवल्याम् । क्षपण्याम् । सुदर्शनगुणस्तद्र० प्रगुणस्व० इ० गौ० दे० भा० प० ॥ सुदर्शनाखादुरुष्णाकफशोफास्रवातजित् ॥ मेरुजम्ब्वाम् ॥ सुराविशेषे ॥

सुदर्शनी । स्त्री० अमरावत्याम् ॥

सुदल: । पुं० क्षीरमोरटे ॥

सुदला । स्त्री० तरुण्याम् । गम्भार्याम् । सेवन्त्याम् । शालपर्ण्याम् ॥

सुदात्त: । पुं० आक्रम निधिप्रविशेषे । वि० तप: सहे ॥

सुदामा । पुं० वारिधरे । मेघे ॥ पर्वतविशेषे । गोपविशेषे समुद्रे । श्वेतद्वीपे । ऐरावते । श्रीकृष्ण

मिथेवाञ्छयविशेषे । त्रि॰ सुदात रि ॥ सुष्ठुददाति । सु दाञ्॰ । आतोमनिन् ॥
सुदामा । स्त्री॰ नदीविशेषे । टाप् ॥
सुदाय : । पुं॰ हरणे । कन्यादान काले॰ अलभिवाहोपदीयमानद्र व्ये । सुष्ठु दीयते । सु दाञ्॰ । घ ञ् । युगागमः ॥
सुदारु : । पुं॰ पारियात्रपर्वते ॥ सुदारुःपारियात्रश्चइतिहेमचन्द्रः ॥ न॰ शोभनदारुणि ॥
सुदि । अ॰ शुक्लपक्षे ॥
सुदिनम् । न॰ शुभदिवसे ॥ त्रि॰ प्रशस्ते ॥ यथा । सुदिनास्सभा सुकार्यमेतत्प्रविचिन्त्योतविशेषत : स्वधर्ममितिप्रयोगः ॥
सुदीर्घ : । त्रि॰ अतिविस्तारे ॥
सुदीर्घघर्मा । स्त्री॰ पतनपर्णाम् ॥
सुदीर्घमालिका । स्त्री॰ वार्त्ताकुविशेषे । सिङ्गागन॰ इतिगौ॰ दे॰ भा॰ प्र॰ ॥
सुदीर्घा । स्त्री॰ चीनाकर्कट्याम् ।
सुदुर्दर्शः । त्रि॰ आत्मानं द्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्यादृष्टरूपत्वात् ॥
सुदुर्लभ । त्रि॰ अतिदुष्प्राप्ये । दुःखेनापिलब्धुमशक्ये ॥ यथा । बहूनांजन्मनामन्ते ज्ञानवान्मांप्र पद्यते । वासुदेवः सर्वमितिसम हात्मासुदुर्लभइति ॥ सुमतिमा न्दुर्लभः ॥
सुदुश्चर : । त्रि॰ अतिशयदुःखेना चरणीये ॥
सुदुष्कर : । त्रि॰ सर्वथाकर्त्तुमशक्ये ॥ अत्यन्तकष्टकरे ॥
सुदुस्तर : । त्रि॰ अतिदुःखेनतर णीये ॥
सुदूर : । त्रि॰ दवीयसि । दविष्ठे । अतिदूरे ॥ यथा । सुदूरमपिगन्त व्यं यत्रमाहेश्वरोजनः ॥
सुदूरपराहत : । त्रि॰ अतिदूरनिरा कृते ॥
सुदृढम् । न॰ अतिदृढे । गाढे ॥ त्रि॰ तद्वति ॥
सुदृढत्वच् । स्त्री॰ काश्मर्याम् ॥
सुदृश् । त्रि॰ शोभनदृष्टियुक्ते ॥
सुदृश्य : । त्रि॰ सुन्दराकृतौ ॥
सुदेवी । स्त्री॰ नाभेर्भार्यायाम् । मेरु संज्ञायाम् ॥
सुदेश : । पुं॰ मत्स्यदेशे । उत्तमदेशे ॥
सुद्युम्न : । पुं॰ वैवस्वतमनोः पुत्रे ॥ त्रि॰ बहुधने । अतिवलशालिनि ॥
सुधन्वा । पुं॰ विश्वकर्मणि । त्वष्ट रि । नरविशेषे ॥ त्रि॰ धन्व नि । प्रौढधानुष्के ॥ शोभनंध नुर्यस्य : । धनुषश्चानङ् ॥
सुधन्वाचार्य्य : । पुं॰ व्रात्याद्वैश्या त्सवर्णायांजातो॰ जातिविशेषे ।

कारये । यथाऽमनुः । वैश्यानु ज्ञायते वाच्यात्सुधन्वाचार्य एव च । कारूषश्च विजन्माच मैत्रः सात्वत एव चेति ॥

सुधर्म्मः । पुं॰ जिनगणाधिपविशेषे ॥

सुधर्म्मा । त्रि॰ धर्म्मशालिनि ॥ कुटुम्बिनि ॥

सुधर्म्मा । स्त्री॰ देवसभायाम् । शोभनो धर्म्मो यस्याः । धर्म्मादनिच् केवलात् । अनुभाभ्यामित्यर्थे टाप् । पनीयदुषीहैरितिङीपृन । सुधर्म्म॰ सुधर्म्मा इत्यादि । क्वाव भावे । सुधर्म्माणौ॰ सुधर्म्माण इत्यादि ॥

सुधा । स्त्री॰ पीयूषे । अमृते । नद्यां । सुरायाम् ॥ सुखेनधीयते । धेट् पाने । आतश्चोपसर्गे इतिकर्म्मण्यङ् । टापि । चूर्णायाम् । मूर्व्वायाम् ॥ स्नुह्याम् ॥ गङ्गायाम् । गङ्गायाम् ॥ शालपर्ण्याम् । विद्युति ॥ शुण्ड्याम् ॥ जले ॥ तोये ॥ रसे ॥ धात्र्याम् ॥ आमलक्याम् ॥ पुष्परसे । मधुनि ॥ परीतत्वात् ॥ सुष्टुदधातिपुष्णाति । डुधाञ्॰ । विच् ॥

सुधांशुः । पुं॰ इन्दौ । चन्द्रे ॥ सुधायुक्ताऽऽशवो यस्य सः ॥

सुधांशुतैलम् । न॰ कर्पूरतैले ।

सुधांशुरत्नम् । न॰ मौक्तिके ॥ चन्द्रकान्ते ॥

सुधाकरः । पुं॰ चन्द्रे ।

सुधाहारः । पुं॰ सौवर्णपर्णे । चूना॰ इ॰ भा॰ प्र॰ ॥ सुधाहारो ऽभिसङ्गाय : पाकोक्तदीपिहार यः ॥

सुधांशुः । पुं॰ चन्द्रमसि ॥

सुधाजीवी । पुं॰ पलगण्डे । लेपके । राज॰ भ॰ भा॰ ॥ सुधयालेपनेनजीवति॰ तच्छीलः णिनिः ॥

सुधाधारः । पुं॰ चन्द्रे । इन्दौ । अमृतपात्रे ॥ सुधायाः आधारः ॥

सुधानिधिः । पुं॰ चन्द्रे ।

सुधाभुक् । पुं॰ गीर्वाणे । देवे । सुधांभुङ्क्ते । भुज॰ । क्विप् ॥

सुधामयः । पुं॰ सौधे । राजसद्मनि । त्रि॰ अमृतात्मके ॥

सुधामोदकः । पुं॰ यवासशर्करायाम् ॥

सुधामोदकजः । पुं॰ तरराजोद्भवखण्डे ॥

सुधावर्षी । पुं॰ विधातरि । विश्वसृजि । बुद्धभेदे ।

सुधावासः । पुं॰ चन्द्रे । न॰ त्रपुषे ॥

सुधारसा । स्त्री॰ मधुरव्याम् ॥

सुधासत्त्वयोगः । पुं॰ अमृतसिद्धियोगे । यथा । हरावनूर्द्ध्वे॰

सुन्द : । पुं॰ रामायणप्रसिद्धवानरविशेषे । राक्षसविशेषे ॥ बाधवाच्ये परमेश्वरे । सुष्ठु उनत्ति । आर्द्रीकरोति । उन्दी॰ । पचाद्यच् । शकन्ध्वादि : ॥

सुन्दर : । पुं॰ कामदेवे । सुन्दरी॰ इति॰ गौ॰ दे॰ भा॰ प्र॰ वर्षे ॥ त्रि॰ रुचिरे । चारुणि । शोभने । मञ्जुनि ॥ सुष्ठु द्रियते । दृङ् आदरे । अपवृद्धिश्च । पृषोदरादि : ॥ यद्वा सुष्ठु उनत्ति॰ चित्तार्द्रीकरोति । उन्दीक्लेदने । बाहुलकाद् र : । शकन्ध्वादि : ॥

सुन्दरिका । स्त्री॰ तीर्थविशेषे ॥

सुन्दरी । स्त्री॰ रूपलावण्यसम्पन्नायां नार्याम् ॥ द्रुमान्तरे । त्रिपुरसुन्दर्याम्देव्याम् ॥ योगिनीविशेषे ॥ हरिद्रायाम् ॥ आयामाख्यम् ॥ छन्दोविशेषे ॥ अयुजोर्यदिसौभगौ युजोः सभराः लगौ यदिसुन्दरी तदा । यथा । यदधीत्य चतुर्वेदमार्गिणोपरितः संश्रमयेन च पद्यया । चपि वागधिपसद्गुणं चेत्यवलसद्विरचीस विस्मयम् । वर्णसमाचारेषि । कुसुमशरशरैरभिभूषिताचरणसङ्गतनूपुरमखिडला । करसुवर्णलसद्वलयान्विता ऋतुरतिक्षणचेतसि सुन्दरि । यथा । नसुखभागरविन्दमुखी प्रियामनसिकामविचेष्टितमोहनम् । मलयमारुतचालितमालतीपरिमलप्रसरोद्गतशाखरः ॥ सुन्दरशब्दस्य गौरादित्वात् ङीष् । पार्वत्याम् ॥

सुन्वन् । त्रि॰ सोमयाजिनि । सोमाभिषवकर्त्तरि ॥ सुनोतेर्लट॰ शत्रादेश : ॥

सुपक्व : । पुं॰ सुगन्धाम्रे ॥ त्रि॰ शोभनपरिणते । परिपक्वे ।

सुपक्वक : । पुं॰ सहकाराम्रे ॥

सुपत्र : । पुं॰ पक्षिशालपर्णे ॥ आदित्यपर्णे । न॰ तेजपत्रे । पत्रके ॥

सुपत्रक : । पुं॰ शिग्रौ ॥

सुपत्रा । स्त्री॰ पालङ्क्याम् ॥ शतावर्याम् । शम्याम् ॥ रुद्रजटायाम् । शालपर्ण्याम् ॥

सुपत्रिका । स्त्री॰ जतुकायाम् ॥

सुपथ : । पुं॰ । शोभनवर्त्मनि । सत्पथे ॥ यथा । सत्पथस्त्वतिपन्थाश्च सुपन्थाः सुपथोपि च इति शब्दरत्नावली ॥

सुपन्था : । पुं॰ अर्चितेऽध्वनि । सत्पथे । अतिपथि ॥ सु : पूजायाम् । कुगतीति समास : । नञ्स्नादि इति समासान्तनिषेध : । कृतसमासान्तनिर्देशात् । पथ : सङ्ख्याव्ययादेरिति न क्लीबत्वम् ॥

सुपथ्य : । त्रि॰ अपीडाकरभोजनादौ ॥

स्वाप्सनिव्युक्तिः सार्वलौकिकीति ॥ शिष्यपर्याये । क्तिच् । सुप्तःसुप्तिं नजानातिनासुप्तं स्वप्नजागरो ॥
सुप्तोत्थित : । त्रि॰ सुप्ताद्वठादुत्थिते । घादौसुप्त : पश्चादुत्थित : ॥
सुप्रजा : । पुं॰ सत्सन्तानवति ॥ त्रि शोभनाश्चप्रजामेधयो : ॥
सुप्रतिभा । स्त्री॰ मदिरायाम् ॥ प्रगल्भतायाम् । प्रागोल्भ्ये ॥
सुप्रतिष्ठा । स्त्री॰ शोभनप्रतिष्ठायाम् ॥ पञ्चाक्षरायांछन्दौ ॥ साध्वि ध्या । पञ्चविधियांच ॥
सुप्रतिष्ठित : । पुं॰ उडुम्बरे ॥ त्रि॰ शोभनप्रतिष्ठायुक्ते ॥ सुस्थिरे ॥ यथास्थिते ॥
सुप्रतीक : । पुं॰ ईशानदिग्गजे ॥ शिवे ॥ कामदेवे ॥ शोभनाङ्गे ॥ त्रि॰ साधौ ॥ शोभनाङ्गविशिष्टे शोभना : प्रतीका : अवयवायस्य ॥ यद्वा । सुप्रपूर्वाद्दिणोऽलीका दित्वात्कीकन् । ह्रस्वस्तुट् च ॥
सुप्रभ : । पुं॰ जिनविशेषे । [illegible] ॥ त्रि॰ सुन्दरप्रभायुक्ते ॥
सुप्रभा । स्त्री॰ वाकुच्याम् ॥ अग्निजिह्वाविशेषे ॥ सुप्रभापद्मरागाभाधारद्ध्यादिविसंस्थितेतितन्त्रसारः ॥ शोभनदीप्तौ ।
सुप्रभातम् । न॰ शुभसूचकप्रातःकाले ॥

सुप्रभाता । स्त्री॰ शोभनप्रभातयुतायांरात्रौ ॥ प्रव्हीपस्यसरितिं ॥
सुप्रयुक्त : । त्रि॰ शोभनप्रयोगविशिष्टे ॥
सुप्रयुक्तशर : । पुं॰ कृतहस्ते ॥
सुप्रयोगविशिख : । पुं॰ कृतहस्ते । सुशिक्षितबाणमोक्षके । सम्यक्कृतशराभ्यासे ॥ शोभनप्रयोगोऽस्य सुप्रयोग : । सुप्रयोगोविशिखोऽस्य ।
सुप्रलम्भ : । त्रि॰ सुखलभ्ये ॥
सुप्रलाप: । पुं॰ सुवचने । सुउक्तौ ॥ सुष्ठुप्रलापः॰ लापनम् । घञ् ॥
सुप्रसन्न : । पुं॰ कुबेरे ॥ कथायांको ॥ त्रि॰ सुप्रसादयुक्ते ।
सुप्रसन्नक : । पुं॰ कृष्णार्जके ॥
सुप्रसरा । स्त्री॰ प्रसारण्याम् । गन्धालिकायामलतायाम् ।,
सुप्रसाद : । पुं॰ शिवे ॥ विष्णौ ॥ शोभनप्रसादोऽस्य ॥ अपचारवतांशिशुपालादोनामपिमोक्षप्रदात्स्वाद्य ॥ सुप्रसन्नतायाम् ॥ त्रि॰ प्रसन्नमुखे ।
सुप्रात : । पुं॰ सुप्रभाते । शोभनंप्रातरस्य । सुप्रातसुश्वेत्यादिना॰ बहुव्रीहावच्प्रत्ययान्तोनिपातित : ॥
सुप्रिया । स्त्री॰ सुभगायाम् । भर्त्तुः प्रियायाम् । सुहृद्यायाम् ॥ मघास्त्वमपरित्यज्यदासिंहेगुरु

भवेत् । यथाऽद्वैकान्यथाचोढासुभगा सुप्रियाभवेत् इतिभरतधृतव्य: ॥

सुफल: । पुं॰ दाडिमे । बदरे । मुद्गे । कर्णिकारे । राजतरौ । आरग्वधविशेषे । छोटासोनालु॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ कपित्थे ॥ सतफलि ॥ त्रि॰ शोभनफलवति । सुष्टु शोभनानिफलान्यस्य ॥

सुफला । स्त्री॰ कुष्माण्डाभेदौषधौ ॥ इन्द्रवारुण्याम् ॥ काश्मर्याम् । कदल्याम् ॥ कपिलद्राक्षायाम् ॥

सुफेनम् । न॰ समुद्रफेने ॥

सुबन्धु: । पुं॰ तिले ॥

सुबलपुत्री । स्त्री॰ गान्धार्याम् ॥

सुबल्लरी । स्त्री॰ पुत्रदात्र्याम् ॥

सुबल्ली । स्त्री॰ वाकुच्याम् । सोमराज्याम् ॥ शोभनावल्लिरस्या: ॥ कदल्याम् ॥

सुब्रह्मण्य: । पुं॰ कार्त्तिकेये ॥ ऋत्विग्विशेषे ॥ गुरौ ॥ वेदादिदेशप्रसिद्धसर्पाधिष्ठातृदेवे॰ सर्पराजेच ॥

सुब्रह्मण्या । स्त्री॰ निगदविशेषे ॥

सुब्रह्मवासुदेव: । पुं॰ ब्रह्मरूपवासुदेवमूर्त्तौ ॥

सुभग: । पुं॰ चम्पके ॥ अशोके ॥ रक्ताम्लाने ॥ टङ्कणे ॥ त्रि॰ हृष्टे ॥ सुन्दरे॰ चक्षुष्ये । शोभनम्॰ भगंशौर्यं यस्य ॥

सुभगा । स्त्री॰ दुर्गायाम् ॥ पतिप्रियायाम् । सुप्रियायाम् ॥ शालिपर्ण्याम् ॥ वनमल्लयाम् ॥ हरिद्रायाम् ॥ सुवर्णकदल्याम् । चम्पककदल्याम् । चम्पकलिका॰ इ॰ भा॰ प्र॰ ॥ नीलदूर्वायाम् ॥ प्रियङ्गौ ॥ कस्तूर्याम् ॥ तुलस्याम् ॥ कैवर्त्तिकायाम् ॥ शोभनस्॰ भगंशौर्यंस्या: ॥

सुभगासुत: । पुं॰ सौभागिनेये ॥ सुभगाया: सुत: ॥

सुभद्र: । पुं॰ मारिषशाके ॥

सुभद्र: । पुं॰ विष्णौ । राजभेदे ॥ त्रि॰ सुमङ्गलयुक्ते ॥

सुभद्रक: । पुं॰ विमाने । बिल्ववृक्षे ।

सुभद्रा । स्त्री॰ श्रीकृष्णभगिन्याम् ॥ वृषभछायाम् ॥ श्यामालतायाम् ॥ काश्मर्याम् । गन्धार्याम् ॥

सुभद्राणी । स्त्री॰ त्रायन्त्याम् । बटुला इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सुभद्रिका । स्त्री॰ दुर्गायाम् ॥

सुभद्रेश: । पुं॰ अर्जुने ॥

सुभानु । पुं॰ वत्सरविशेषे ॥ तत् फलंयथा । सुभिक्षंचसमारोग्यं विप्रवह्निकपद्रवम् । व्यवहारोभवेद्दृष्टं सुभानौदेवपूजिते ॥ १७॥

सुभाषित: । पुं॰ बुधे ॥ न॰ सुवचने ॥ हितोपदेशवचने ॥ यथा स्वर्गापवर्गसिद्ध्यर्थंभाषितंयत्सु

नजजलगैर्म दितासुमुखी । यथा । तरणिसुतातटकुञ्जगृहे शदनविधुस्मितदीधितिभि: । तिमिरमुदस्य सुखंसुमुखीहरिमवलोक्यचुचुम्बचिरम् ॥ सुन्दरवदनायाम् ॥ लाक्षाद्योपसर्जनादस्यैवगौ।पद्मादित्विञ्च ।

सुमुष्टि : । पुं॰ विषमुष्टवृचे । डीखिकायाम् ॥

सुमूल : । पुं॰ श्वेतशोभाञ्जने ॥

सुमूलकम् । न॰ गर्जरे ॥

सुमूला । स्त्री॰ शालपर्ण्याम् ॥ पृश्निपर्ण्यां ॥

सुमेखल : । पुं॰ मुञ्जे ॥ त्रि॰ शोभनमेखलायुक्ते ।

सुमेधा : । स्त्री॰ ज्योतिष्मत्याम् । त्रि॰ सुबुद्धौ । विदुषि ॥ शोभनामेधाप्रज्ञायस्य स : । नित्यमसिच्प्रजामेधयोरित्यसिच्समासान्त: ॥

सुमेरु : । पुं॰ पर्वतविशेषे । मेरौ । हेमाद्रौ । रत्नसानौ । सुरालये । सिमेरोतिक्षिपति॰ उच्चत्वाज्ज्योतींषि । रुमिञ्प्रक्षेपणे । सिपीभ्यांरु॰ । सुमेरुरित्युपसर्गान्तरनिरर्थक्यम् ॥

सुम्नम् । न॰ सुखे ॥

सुम्पलुगठ : । पुं॰ यपूरके ॥

सुम्भ । पुं॰ देशविशेषे । असुरभेदे ।

सुम्यम् । न॰ रव्यौ ॥ सुपूजितमौ यती । मौढ्यगव्याम् । एरच् । वा कुलकाद्यण् ॥ सुमेषुयो साधुर्वा । तत्रसाधुरितियत् ॥

सुयन्त्रित : । त्रि॰ शास्त्रीयनियमिते विप्रादौ ॥

सुयामुन : । पुं॰ वत्सराजे । प्रासादे । पर्वतविशेषे ॥ अच्युते । शौरौ । शोभनायमुनासम्बन्धिन : परिवेष्टारोऽस्य ॥ यामुना: परि वेष्टार : पद्मासनादय : शोभनायस्य तिया ॥

सुयोजित : । त्रि॰ नियुक्ते ॥

सुयोधन : । पुं॰ दुर्योधने ॥ सुखेन युध्यतेससुयोधन : । भाषायांशासियुधिदृशिधृषिमृषिभ्योयुच् ॥

सुर : । पुं॰ अमरे । निर्जरे । देवे । सुरति । सु रयतयैश्वर्यधी : । तुदादि : । इगुपधेतिक : ॥ यथा । क्षीरसमुद्रोत्थासुरा॰ माघस्थि॰ अर्थेच्छयर्थं॰ अर्ग साद्यच् ॥ सुरापरिग्रहात्सुर : । तथाचार्षेरामायणे । वरुणस्यतत: कन्यावारुणी रघुनन्दन । उत्पपातरमातृत स्मान्मार्गमाणापरिग्रहम् ॥१६ ॥ दितेः पुत्रानतांरामजगृहुर्वरुणात्मजाम् । अदितेस्तुसुताश्रीमोत्ता मगृह्णन्तयेसुरा : ॥ २०। सुरापरिग्रहाद्देवा : सुराद्भ्यभिविश्रुता : । अपरिग्रहणात्तस्यादैतेया

सुरपर्णिका । स्त्री० पुन्नागे ॥

सुरपर्णी । स्त्री० पलाश्याम्

सुरपादपः । पुं० कल्पवृक्षे ॥

सुरपुन्नागः । पुं० पुन्नागभेदे । म० भेरौ ।

सुरपुरी । स्त्री० अमरावत्याम् ॥

सुरप्रियः । पुं० अगस्त्यवृक्षे ॥

सुरप्रिया । स्त्री० जात्याम् । स्वर्णरम्भायाम् ॥

सुरभि । पुं० चम्पके । वसन्ते । जातीफले ॥ सुगन्धौ । चैत्रमासे । खतुमुस्ते । धूनके । कदम्बवृक्षे । बकुलद्रुमे । गन्धतृणे । शमीवृक्षे । न० स्वर्णे । गन्धोपले । गन्धपाषाणे ॥ सुगन्धे ॥ सुन्दरे । स्त्री० शल्लक्यामोषधौ । गजभक्षायाम् ॥ मातृभिदि ॥ मुरायाम् ॥ गवि । रुद्रजटायाम् ॥ नवमालिकायाम् । नखाख्याम् ॥ आख्याम् । मपितराचख्याम् । तुलस्याम् ॥ वर्वरीतुलस्याम् । छायायाम् । मैदिन्याम् । सुरायाम् । गवामातरि ॥ यथा । गवामधिष्ठातृदेवी गवामाद्या गवांप्रसूः । गवान्प्रधाना सुरभि गोलोकेसास मुद्भवा ॥ त्रि० सुगन्धौ । कान्ते । शोभने । विख्याते । सचिवे । धीरे ॥ सुष्टु रभते० रम्यतेऽवा० सुष्टु रभन्ते रमासयुक्ताभवन्त्यनया । रभ शमले । सर्वधातुभ्यइन् । याम मानिच्छत्वान्नुम् ॥

सुरभिका । स्त्री० स्वर्णकदल्याम् ॥

सुरभिगन्धा । स्त्री० मालत्याम् । चवि जौ० हू० भा० प्र० ॥

सुरभिगन्धिः । त्रि० शोभनगन्धविशिष्टे । सुरभिर्गन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥

सुरभित । त्रि० वासिते ।

सुरभित्रिफला । स्त्री० सुगन्धित्रिफलायाम् ॥

सुरभित्वच् । स्त्री० बृहदेलायाम् ॥

सुरभिदारुः । पुं० सरलवृक्षे ।

सुरभिपत्रा । स्त्री० जम्ब्वाम् ॥ राजजम्बूवृक्षे ॥

सुरभिवल्कलम् । न० गुडत्वचि ॥

सुरभिस्रवा । स्त्री० शल्लक्याम् ॥

सुरभी । स्त्री० चानोद्माने । सुरभी । गरप्रसूर्ता ।

सुरभीरसा । स्त्री० शल्लकीवृक्षे ॥

सुरभूरुहः । पुं० देवदारुणि । कल्पवृक्षादौ ॥

सुरमृत्तिका । स्त्री० तुवर्याम् । काक्ष्याम् । सौराष्ट्रमृत्तिकायाम् । फटकरी० हू० भा० ॥

सुरमेदा । स्त्री० महामेदायाम् ।

सुरराजः । पुं० इन्द्रे । सुराणांराजा । टच् ॥

सुरर्षिः । पुं० नारदादौ । नारदा

स्फुरति । गच्छति । स्थिगिती । पचाद्यच् ॥

स्फुलिङ्गा । स्त्री० अग्निकणजाले ॥ जातावपिनङीष् । अजादिषुपाठात् टाप् ॥

स्फुलिङ्गिनी । स्त्री० अग्नेर्जिह्वाविशेषे ॥

स्फूत्कारः । पुं० फूत्कारे ॥

स्फूर्जकः । पुं० तिन्दुकवृक्षे । तेंदू० बू० भा० प्र० ॥ स्फूर्जति । टुओस्फूर्जाव्वज्रनिर्घोषे ॥ ण्वुल् ॥

स्फूर्जथुः । पुं० वज्रनिर्घोषे । वज्रपातजध्वनौ ॥ स्फूर्जनम् । ट्वोस्फूर्जा० । द्वितीयथुच् । मेघनादे । तपड्कोये ॥

स्फूर्जनः । पुं० तिन्दुके ॥

स्फूर्तिः । स्त्री० स्फुरणे ॥

स्फूर्तिमान् । त्रि० पाशुपते ॥ यथा । पाशुपिंश : पाशुपतसिद्धः स्फूर्तिमानमतः । इतिविश्वालोचनः । स्फूर्तिविशिष्टे ॥

स्फेमा । पुं० स्फिरत्वे । प्रचुरतायाम् ॥ स्फिरस्यभावः । पृथ्वादिभ्यइमनिच् । प्रियस्थिरेत्यादिनास्फादेशः ॥

स्फेयः । त्रि० प्रचुरतरे । स्फिरतरे ॥ द्वयोर्मध्येऽतिशयेनस्फिरम् । ईयसुन् । प्रियस्थिरेतिस्फादेशः ॥

स्फेरम् । त्रि० भूयिष्ठे ॥

स्फेष्ठः । त्रि० अतिशये । भूयिष्ठे । बहूनामेषामतिशयेनस्फिरः । इष्ठन् । प्रियस्थिरेतिसाधुः ॥

स्फैयकृतः । पुं० स्फेयकृतापत्ये ॥ अण् ॥

स्फोटः । पुं० स्फोटके । विस्फोटे । पिटके । शब्दव्यापारे । स्फुटति व्यक्तीभवत्यर्थः० स्फुटत्यर्थो यस्मादितिवा । स्फुटविकसने । घञ्० अच्वा ॥

स्फोटकः । पुं० फोडाइतिख्याते० रोगे । पिटके । स्फोटति स्फुटिर् विशरणे । ण्वुल् ॥

स्फोटनम् । न० विदारणे ॥

स्फोटनी । स्त्री० मणिमुक्तादिवेधोपकरणे । यास्फोटयाम् । स्फोट्यतेऽनया । स्फुटभेदनेचुरादिः । करणेल्युट् ॥

स्फोटबीजः । }
स्फोटबीजकः । } पुं० वातारीगलारके ॥

स्फोटायनः । पुं० मुनिविशेषे । कक्षीवति । स्फोटप्रतिपादनपरे० वैयाकरणे । स्फोटोऽयनं परायणंयस्य सः ॥

स्फोटिका । स्त्री० खञ्जनिकायाम् । प्रावृद्धिकायां ॥

स्फ्यः । पुं० यज्ञाङ्गभूते० खड्गा

ने ॥ धियि । इच्छायाम् ॥ अनु
भूतविषयज्ञाने ॥ स्वाभ्यायितवि
षयजन्यसंस्कारजन्यज्ञानं स्मृतिरि
तिरसमञ्जरी ॥ ज्ञाताज्ञातार्थपदि
ष्टार्थानुसन्धाने ॥ अनुभवजन्यसंस्का
रजन्यज्ञाने ॥ यथा । विभुर्दृष्टा
दिगुणवान् बुद्धिस्तु द्विविधा मता
। अनुभूतिः स्मृतिश्चाद्या अनु-
भूतिश्चतुर्विधेति भाषापरिच्छेदः
॥ सा स्मृतिर्द्विधा । यथार्था च
यथार्था च । तत्र प्रमाजन्या यथार्था
अप्रमाजन्याऽयथार्था ॥ अनुभूतवि
षयाऽसम्प्रमोषप्रत्यये ॥ पूर्वानुभ
वसंस्कारजज्ञाने । चिरानुभूता
र्थस्मरणशक्तौ ॥ एतज्जन्मानिवर्त्तानु
भूतार्थविषयायां शक्तौ ॥ योगिनां
तु जन्मान्तरानुभूतार्थविषयापि
स्मृतिर्भवति ॥ अनुभूतप्रियादी
नामधर्मात्मिका स्मृतिः । तत्
साम्य एवं व्यवसायानि : प्रसिता
दयः । तत्पर्यायाः ;। चिन्ता ।
आध्यानम् । चिन्तिया । ध्यानम्
। स्मरणम् । अर्च्चिति । स्मरणम्
स्मृ आध्याने । क्तिन् ॥

स्मृतिमान् । त्रि० पूर्वानुभूतार्थ
स्मरणशीले । स्मृतिविशिष्टे ॥ स्मृ
तिरस्त्यस्यास्मिन् वा । मतुप् ॥

स्मृतिविभ्रमः । पुं० स्मृतेर्विच-
लने ।

स्मृतिविरुद्धः । त्रि० धर्म्मशास्त्रवि
परीते ॥ यथाकूर्म्मपुराणे हिमालयं
प्रतिदेवीवाक्यम् । यानि शास्त्राणि
दृश्यन्ते लोकेऽस्मिन् विविधानि च ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां
तु तामसी ॥ कापालं भैरवञ्चैव याम
लं वाममार्हतम् । एवंविधानि चा
न्यानि मोहनार्थानि तानि वै ॥ म
या सृष्टानि चान्यानि मोहायैषां भवा-
र्णवे० इति ॥ ओषप्रसिद्धारोपि
स्मानिचित्तत्यजितानिचेतिमहानि-
र्वाणतन्त्रम् ॥

स्मृतिशास्त्रम् । न० धर्म्मसंहिताया-
म् ॥

स्मृतिहेतुः । पुं० स्मरणहेतौ । वास
नायाम् । संस्कारे । भावना-
याम् ॥

स्मेरः । पुं० प्रकाशे । त्रि० प्रकाशयु
क्ते ॥ ईषद्धसनशीले ॥ अयं तेन
स्मेरः । प्राड् ईषद्धसने । न
मिकम्पिस्म्यजसकमहिंसदीपोरः

स्मेरास्यः । त्रि० स्मितमुखे ॥

स्यदः । पुं० वेगे । रये ॥ स्यदो
गतिवचनोऽस्य प्रयोगः स्यन्दतेऽनेन
। स्यन्दनं यास्यन्द प्रस्रवणे ।
स्यदो जवइति घञन्तो निपातितः ॥
वेगाद्यर्थे ॥

स्यन्दः । पुं० स्यन्दने ॥

स्यन्दनः । पुं० तिनिशवृक्षे । नेमि

स्वप्रमाणकः । त्रि० स्वतःसिद्धे ॥

स्वभावः । पुं० स्वजधर्मविशेषे । संसिद्धौ । प्रकृतौ । स्वरूपे । निसर्गे । स्वभावस्यान्तरं कश्चिद्येनास्याऽसदासद्सदाख्यं निष्पद्यते । जन्मान्तरकृतधर्माधर्मादिशुभाशुभसंस्कारे । इदानीन्तनजन्मारम्भकीभूतसंस्कारे ॥ सच सात्त्विकादिभेदात् त्रिविधः । अनाद्यविद्यायाम् ॥ स्वतएवाविर्भावे ॥ यथा । नखिर्दं स्वमपि घोतु स्वभावोयमपोषितः । निमर्गं स्वस्वरूपश्चेत्येवोपि भवतिद्विधा । निसर्ग । सुदृढाभ्यासजन्यः संस्कारउच्यते । चजन्यस्तु गतः सिद्ध स्वरूपं भावप्रत्यतद्युक्तक्रमी गतोयि । स्वीभावः नत्तायत्तकस्वभावः परन्याधीनसत्ताकः ॥

स्वभावोक्तिः । स्त्री० अर्थालङ्कारविशेषे । यथा । स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् । पश्चादद्यौ प्रसार्यं त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठोमुखमुरसिसटां धूलिधूम्रां विधूय । घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गोमन्दं शब्दायमानोविलिखतिशयनादुत्थितः क्ष्मां खुरेणेति ॥ स्वभावो-

क्तिरलङ्कारोयथावद्वस्तुवर्णनमिति सद्वपथाचारम् ।

स्वभूः । पुं० विष्णौ । हरौ ॥ ब्रह्मणि । प्रजापतौ । परमेष्ठिनि । स्वयम्भवति । भुवद्रुसिंक्विप् ॥

स्वमेकः । पुं० संवत्सरे ॥ यथा । स्वमिकमिवयरद्वाश्वपाभयमिच्छिका । रुधिरैवीरयस्य हतपितापि विषय्यपितिपुरायम् ॥ स्वमेकं संवत्सरीयज्योमासद्वतिश्रुतिः ॥

स्वयंसारिका । स्त्री० स्त्रीविशेषे ॥

स्वयङ्कृतः । त्रि० आत्मनाकृते ॥ स्वयङ्कृतनैतिसत्पुरुषः ॥

स्वयङ्ग्रुप्ता । स्त्री० गुप्ताभिमुख्याम् ।

स्वयङ्ग्रहः । पुं० प्रार्थनाविनाग्रहणे ॥

स्वयन्दत्तः । पुं० द्वादशविधपुत्रान्तर्गतपुत्रविशेषे ॥ यथाह मनुः । मातापितृविहीनोयस्त्यक्तोवास्यादकारणात् । आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तुसस्मृतइति । आत्मानं स्वयं ददाति तवाहं पुत्रोभवामीति । स्वयन्दत्तः उपनतः स्वयं प्राप्तइतियावत् ॥

स्वयम् । अ० आत्मनेत्यर्थे । आप् । तु० आ० प्र० ॥ सुप् अयते । अय गतौ । अम् ॥

स्वयमुपस्थितः । त्रि० स्वयमागते ॥

स्वयम्प्रकाशः । त्रि० स्वतः साधना

